# मृच्छकटिकम् ।

( प्रकरणम् )

कविप्रवर-

श्रीशूद्रकराजेन विरचितम् ।



महामहोपाध्याय-

श्रीयुक्तहरिदाससिद्धान्तवागीशभट्टाचार्य्येण

प्रणीतया वसन्तसुषमासमाख्यया टीकया

तत्कृतवङ्गानुवादेन च सहितम् ।

द्वितीयसंस्करणम् ।



१८५६ शकाब्दीयसौरज्यैष्ठस्य षष्ठदिवसे

मूल्यं ३) राजतमुद्रात्रयम् ।



মহামহোপাধ্যায় শ্রীহরিদাস সিদ্ধান্তবাগীশ

# विज्ञापनम् ।

हन्त ! दृश्यते खलु जगत्यां प्रायेण सर्ववस्तुनामेव नूतनस्यादरो गरीयान् । नवीनः पुमान् नवीना रमणी नवञ्च नारिकेलमित्यादिकं नवीनं वस्तुजातं कस्यादरं नाकर्षति । संस्कृतग्रन्थविषये तु विपरीत एवायं नियमः ; तुच्छमपि प्राचीनमतिसमीचीनं मन्यमानः सादरमादत्ते, चमत्कारिणमपि नवीनमरुचिविचलितचित्तश्चक्षुषापि विलोकयितुं विकलते लोकः । अतएवैतत् दुःखसमाक्षेपविकलहृदयः कालिदासोऽपि मालविकाग्निमित्रे— "पुराणमित्येव न साधु सर्व्वं

न चापि काव्यं नवमित्यवद्यम् ।"

इति साक्षेपमाख्यातवान् । तत् किमयं भारतस्यैव स्वभावः ? उत वा भारतस्यावनतिस्वभावः ?। तत्र प्राचीनकाले नवीनादरणदर्शनात् भारतस्यावनतिस्वभाव एवायमिति सिद्धान्तयन्ति तत्त्वविदः । ब्रुवन्ति च ते—"यदा पुनरिमे भारतवासिनो विद्वेषविषविहीनाः सन्तः स्वदेशीयनवीनमादत्तुं शिक्षिष्यन्ते ; प्रवर्त्तिष्यन्ते च तदा नवनवाविष्कारेषु साधारणाः ; तन्मूला चोन्नतिरवश्यम्भाविनी" इति । हन्त ! न जाने तादृशः कालः कदागमिष्यति, वस्तुत एवागमिष्यति नवेति । अस्माकन्तु ईदृशनवीनावहेलनसमय एव नवीनं ग्रन्थं विरचयतां यशोलेशलिप्सापि हृदये नोदयते, व्ययबहुलतया अर्थलिप्सामपि व्यर्थामेव समर्थयते मनः ; तथापि तु पाठार्थिनां सुविधाविधानाय महीयानयमायास इति ।

विनीत—

१८४४ शकाब्दीय-श्रीआषाढस्य द्वाविंशतितमदिवसे ] श्रीहरिदासशर्म्मणः ।

# नाट्योल्लिखितव्यक्तिगणः ।

## पुरुषगणः ।

| | |
|---|---|
| सूत्रधारः | प्रधाननटः । |
| चारुदत्तः | उज्जयिनीस्थो भद्रलोकः । |
| मैत्रेयः | चारुदत्तवयस्यः । |
| विटः | शिक्षितलम्पटो भद्रलोकः । |
| शकारः | राज्ञो भोग्यस्त्रिया भ्राता । |
| चेटः | शकारस्य भृत्यः । |
| संवाहकः | चारुदत्तस्य गात्रमर्द्दको भृत्यः परञ्च बौद्धसन्न्यासी । |
| माथुरः | द्यूतसभाध्यक्षः । |
| द्यूतकरः | कश्चित् द्यूतसेवी । |
| दर्द्दुरकः | भूतपूर्वद्यूतसेवी । |
| कर्णपूरकः | वसन्तसेनाभृत्यः । |
| चेटः | वर्द्धमानकनामा चारुदत्तभृत्यः । |
| शर्विलकः | दुर्द्धर्षः कश्चित् ब्राह्मणयुवा । |
| चेटः | वसन्तसेनाया गोशकटचालकः । |
| बन्धुलाः | वसन्तसेनाभवनस्थाः केचित् जारजाः । |
| विटः | वसन्तसेनासहचरो भद्रलोकः । |
| दारकः | रोहसेनो नाम चारुदत्तपुत्रः । |
| स्थावरकः | शकारस्य भृत्यः । |
| आर्य्यकः | गोपपुत्रो भावी राजा । |
| वीरकः | पालकराजप्रधानसेनापतिः । |
| चन्दनकः | पालकराजसेनापतिः । |
| भिक्षुः | संवाहक एव । |
| शोधनकः | विचारालयभृत्यः । |
| अधिकरणिकः | विचारकः । |
| श्रेष्ठिकायस्थौ | विचारालयकर्म्मचारिणौ । |
| चाण्डालौ | घातकौ । |

---

## स्त्रीगणः ।

| | |
|---|---|
| नटी | सूत्रधारस्य स्त्री । |
| वसन्तसेना | वेश्याकन्या । |
| रदनिका | चारुदत्तस्य दासी । |
| मदनिका | वसन्तसेनाया दासी । |
| चेटी | वसन्तसेनाया अपरा दासी । |
| वधूः | धूतानाम्नी चारुदत्तस्य पत्नी । |
| छत्रधारिणी | वसन्तसेनाया इतरा दासी । |
| चेटी | धूताया दासी । |
| वृद्धा | वसन्तसेनाया माता । |

## अथ कविसमयनिरूपणम् ।

यद्यपि शूद्रककवेः समयनिरूपणं स्पष्टप्रमाणाभावेन दुष्करमिव प्रतिभाति, तथाप्यशक्यमित्यपि वक्तुं न शक्यते। तथा च "मृच्छकटिकं सर्व्वप्राचीनम्" इति हि प्रचरति सम्प्रदायसिद्धश्चिरन्तनः प्रवादः। तत्र चादिमां सीमामन्विष्यता नाधिकं परिश्रमितव्यम्। अस्ति हि मृच्छकटिके चाणक्यनामोल्लेखः (क); चाणक्यश्च चन्द्रगुप्तमन्त्री, चन्द्रगुप्तश्च ग्रीक्‌देशीयमहावीरेण आलेक्‌जाण्डारेण सह सम्मिलित आसीत्। आलेक्‌जाण्डारश्च खृष्टजन्मनः पूर्व्ववर्त्तिनि ३२७ वत्सरे भारतमाक्रमितुमाजगाम। अतश्च शूद्रको राजा खृष्टजन्मनः पूर्व्ववर्त्ति ३२७ वत्सरात् परमाविर्बभूवेत्यवश्यमेवावधारणीयम्।

पश्चिमां सीमामन्विष्यता तु सर्व्वमेतत् पर्य्यालोचनीयम्। यथा चन्द्रगुप्तपौत्रः खल्वशोकः, नवीनं साम्राज्यमधिगतो नितरामत्याचारेण "चण्डाशोकः" इति निन्दितोपाधिना प्रजाभिराख्यायमानः गच्छता कालेन स्वयमपि स्वकर्म्मणा ग्लानिमापन्नो बौद्धधर्म्ममाश्रयन् तञ्च धर्म्मं स्वदेशे भारतवर्षे प्रचारयन् देशान्तरेष्वपि चीनजापानादिषु प्रचारितवान्। अत्रान्तरे बौद्धधर्म्मो राजधर्म्मतया राजचेष्टया च भारते प्रायेण सर्व्वत्रैवास्पदमासादयामास। तेन च तदानीन्तनभारतीयप्रधाननगर्य्यामुज्जयिन्यामपि बौद्धधर्म्मः प्रबलतामुपलेभे इत्यवश्यमङ्गीकार्य्यम्। अथ च मृच्छकटिक एव विपुलतरमार्य्यसनातनधर्म्मानुष्ठानं दृश्यते।

(क) "मन्थाली पलायन्ती मल्लगन्धे ण शूद्दा।
केशविन्दे पलामिट्टा चाणक्केणेव्व द्रौपदी॥"
मृच्छकटिकप्रथमाङ्के ३९ श्लोकः। (८१ पृष्ठे)

यथा कविरयं स्वयमेवाश्वमेधेन यजति (ख); चारुदत्तो बलिर्वैश्वदेवं निर्वाहयते सन्ध्याञ्चोपास्ते (ग); वसन्तसेना च स्नात्वा देवपूजां निर्वर्त्तयते (घ); ब्राह्मणः शर्व्विलकः कार्त्तिकेयं नमस्कुरुते, यज्ञोपवीतञ्च दधाति (ङ); राजा पालकश्च यज्ञमनुतिष्ठति, यज्ञे पशुहत्याञ्च सूचयति शर्व्विलकः (च); तेन च श्रुतिस्मृत्युक्तधर्म्ममयमेवेदं मृच्छकटिकमिति सर्व्वथा मन्तव्यम्। ततश्च अशोकेन बौद्धधर्म्मप्रचारात् पूर्व्वमेवेदं शूद्रकेण विरचितमित्यकामेनाप्यवश्यमङ्गीकार्य्यम्। न च संवाहकेन बौद्धसन्न्यासावलम्बनादत्र बौद्धधर्म्माख्यानमप्यस्तीति वाच्यम् (छ); विरलं हि तत्। किञ्च तत्पूर्व्वमेव च बुद्धदेवाविर्भावात् अशोकेन तद्धर्म्मग्रहणात् प्राक् अराजधर्म्मतया प्रजाभिर्बाध्यमानो बौद्धधर्म्मो विरलप्रचार आसीत्। ततश्च एकमात्रसंवाहकस्यैव बौद्धधर्म्माश्रयणं दर्शितम्। बहुकालात् परं बौद्धधर्म्मे शैथिल्यमापन्ने भगवता शङ्करेण बौद्धधर्म्मं निरस्य संस्थापिते वा सनातनधर्म्मे

(ख) "परमसमुदयेनाश्वमेधेन चेष्टा" प्रथमाङ्के ४ श्लोकः। ( ६ पृष्ठे )

(ग) चारु। "वयस्य! समाप्तजपोऽस्मि। तत् साम्प्रतं गच्छ, मातृभ्यो बलिमुपहर।" प्रथमाङ्के। ( ७४ पृष्ठे )

(घ) चेटी। "अज्जए! अत्ता आदिसदि ण्हादा भविअ देवदाणं पूअं णिव्वत्तेहि त्ति।" द्वितीयाङ्के। ( १२५ पृष्ठे )

(ङ) "नमो वरदाय कुमारकार्त्तिकेयाय" "इदं यज्ञोपवीतं प्रमाणसूत्रं भविष्यति।" तृतीयाङ्के। ( २१७ पृष्ठे ) ( २१८ पृष्ठे च )

(च) "पशुवत् यज्ञवाटस्थो दुरात्मा पालको हतः।" दशमाङ्के ५१ श्लोकः। ( ७५३ पृष्ठे )

(छ) "अज्जए! अहं एदिणा जूदिअरलावमाणेण सक्क-समणके हुविस्सं।" द्वितीयाङ्के। ( १८२ पृष्ठे )

शूद्रकेण मृच्छकटिकं निर्म्मितमित्युक्तौ तु अस्य सर्व्वप्राचीनतावादो व्याहन्येत।

अतः खृष्टजन्मपूर्व्वतृतीयशताब्दीसमय एव शूद्रकस्याविर्भावसमय इति प्रतीयते। एवञ्च शकुन्तलानाटकादिभ्यः प्राचीनतया "मृच्छकटिकं सर्व्वप्राचीनम्" इति साम्प्रदायिकप्रवादोऽपि सङ्गच्छते।

केचित्तु शूद्रककविं खृष्टीयषष्ठशताब्दीयं वदन्ति।

—:०:—

## अथ स्वरूपादिनिरूपणम्।

मृच्छकटिकं नामेदं प्रकरणम्। एतद्वृत्तान्तस्य लौकिकत्वात् कविकल्पितत्वाच्च। यथा साहित्यदर्पणे—

"भवेत् प्रकरणे वृत्तं लौकिकं कविकल्पितम्।
शृङ्गारोऽङ्गी नायकस्तु विप्रोऽमात्योऽथवा वणिक्।
सापायधर्म्मकामार्थपरो धीरप्रशान्तकः॥"

तत्र ब्राह्मणश्चारुदत्तो धीरप्रशान्तलक्षणो नायकः। यथा तत्रैव—

"सामान्यगुणैर्भूयान् द्विजादिको धीरप्रशान्तः स्यात्॥"

अवेश्यावृत्तिर्वेश्याजातीया वसन्तसेना, कुलजा स्वीया धूतादेवी च नायिका। यथा—

"नायिका कुलजा क्वापि वेश्या क्वापि द्वयं क्वचित्।
तेन भेदास्त्रयस्तस्य तत्र भेदस्तृतीयकः।
कितवद्यूतकारादिविटचेटकसङ्कुलः॥"

"कुलस्त्री पुष्पभूषिते। वेश्या तु तरङ्गदत्ते। द्वे अपि मृच्छकटिके।" इति च तद्वृत्तिः। तेनेदं दर्पणोक्ततृतीयभेदान्तर्गतं प्रकरणम्। प्राधान्यात्तु वसन्तसेनैव नायिकेति लोकवादः।

"धीरा कलाप्रगल्भा स्यात् वेश्या सामान्यनायिका ।"

"एषापि मदनायत्ता क्वापि सत्यानुरागिणी ।"

"विनयार्जवादियुक्ता गृहकर्म्मपरा पतिव्रता स्वीया ।"

तत्रापि धूर्त्ता मध्या धीरा च । तल्लक्षणन्तु दर्पणादावुन्नेयम् ।

वसन्तसेनाया अभिसारात् पूर्वं पूर्वरागाख्यो विप्रलम्भ-शृङ्गारः, तस्याश्चारुदत्तगेहेऽवस्थानसमये सम्भोगशृङ्गारः, तथा शकारकर्त्तृकमोटनाच्च परं करुणविप्रलम्भः । यथा—

"श्रवणाद्दर्शनाद्वापि मिथः संरूढरागयोः ।
दशाविशेषो योऽप्राप्तौ पूर्वरागः स उच्यते ॥"

"दर्शनस्पर्शनादीनि निषेवेते विलासिनौ ।
यत्रानुरक्तावन्योन्यं सम्भोगोऽयमुदाहृतः ॥"

"यूनोरेकतरस्मिन् गतवति लोकान्तरं पुनर्लभ्ये ।
विमनायते यदैकस्तदा भवेत् करुणविप्रलम्भाख्यः ॥"

बाहुल्येन वैदर्भी रीतिः । तथा च—

"माधुर्य्यव्यञ्जकैर्वर्णैः रचना ललितात्मिका ।
अवृत्तिरल्पवृत्तिर्वा वैदर्भी रीतिरिष्यते ॥"

प्रायेण प्रसादो गुणः । यथा तत्रैव—

"चित्तं व्याप्नोति यः क्षिप्रं शुष्केन्धनमिवानलः ।
स प्रसादः समस्तेषु रसेषु रचनासु च ॥"

तदयं संग्रहश्लोकः—

नेता प्रशान्तो द्विजचारुदत्तः नेत्री तु धूर्त्ता च वसन्तसेना ।
विभिन्नशृङ्गाररसः किलाङ्गी वैदर्भरीतिश्च गुणः प्रसादः ॥



# मृच्छकटिकम् ।

———:०:———

## प्रथमोऽङ्कः ।

———०———

पर्य्यङ्कग्रन्थिबन्धद्विगुणितभुजगाश्लेषसंवीतजानो-
रन्तःप्राणावरोधव्युपरतसकलज्ञानरुद्धेन्द्रियस्य ।
आत्मन्यात्मानमेव व्यपगतकरणं पश्यतस्तत्त्वदृष्ट्या
शम्भोर्वः पातु शून्येक्षणघटितलयब्रह्मलग्नः समाधिः ॥१॥

नमो गणेशाय ।

सुवर्णकृतसद्वर्ण-राजद्राजतशैलवत् ।
सर्वदः सर्वदा भूयात् सशिवः स शिवः शिवः ॥१॥
कलानिधेः शूद्रकभूपतेरिमां वाक्चन्द्रिकां नित्यनिसर्गनिर्म्मलाम् ।
टीकाभ्ररम्भे गगने सतां गणे क्रियादपूर्व्वां किल पूर्व्वतः प्रियाम् ॥२॥

अथ कश्चित् कविप्रवरो लोकान्तरगतशूद्रकनृपतेः कीर्त्तिनाम्नोः स्थितिप्रचारार्थं तदीय-दायादात् वाञ्छितार्थलाभाङ्गीकारमादाय मृच्छकटिकं नाम प्रकरणं निर्म्मातुमिच्छन् तस्य निर्विघ्ननिष्पत्तये "रङ्गविघ्नोपशान्त्यर्थं नान्दीमादौ प्रयोजयेत्" इत्यालङ्कारिकवचनप्रामाण्यात् रङ्गविघ्नोपशान्तये सूत्रधारपठनीयां नान्दीमुपनिबध्नाति—

पर्य्यङ्केति । पर्य्यङ्कस्य साधारणखट्वायाः, ग्रन्थौ पादैः सह तिर्य्यग्दण्डानां संयोग-स्थले, यो बन्धो बन्धनरज्जुः, तद्वत् द्विगुणितो द्विगुणतामापन्नः, यो भुजगः सर्पः, तेन

आश्लेषस्य वीत आलिङ्गनवत् दृढवेष्टिते जानुनी जानुद्वयं यस्य तस्य, सर्पेण दृढबद्धजानुद्वयावस्थया पद्मासनस्थस्येत्यर्थः । एतेन यथा पादैः सह तिर्य्यग्दण्डानां सन्धिदेशे द्विगुणितरज्जुभिर्दृढबद्धतया उपरि गुरुतरभारपातेऽपि खट्वायाः स्खलनं न सम्भवति, तथा सर्पेण जानुयुगलस्य दृढबद्धतया एकभावेन सुदीर्घकालमध्युपविष्टस्य कदाचिदसहत्वादतर्कितभावेन पद्मासनस्य स्खलनं न सम्भवतीति दर्शितम् ।

अन्तः शरीराभ्यन्तर एव, प्राणानां प्राणादिवायुपञ्चकस्य अवरोधेन, व्युपरतं स्वयमेव निवृत्तं सकलं ज्ञानं बाह्यपदार्थबोधो यस्मिन् कर्म्मणि तद्यथा तथा, रुद्धानि इन्द्रियाणि कर्णनयनादीनि येन तस्य । "सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च" इति सांख्यकारिकोक्तेः प्राणानामिन्द्रियवृत्तिरूपत्वात् तन्निरोधेनैव च वृत्तिमतामिन्द्रियाणामपि निरोधावश्यम्भावात् सकलबाह्यपदार्थज्ञाननिवृत्तिरिति भावः ।

तथा तत्त्वदृष्ट्या यथार्थज्ञानेन प्रकृतिपुरुषयोर्विवेकज्ञानेनेत्यर्थः, आत्मन्येव स्वजीवचैतन्य एव, व्यपगतं निवृत्तं करणं शरीरं यस्य तं निराकारमित्यर्थः, आत्मानं ब्रह्मचैतन्यम्, पश्यतः "तत्त्वमसि" इति महावाक्यानुसारेणावलोकयतः अभेदेन जीवात्मपरमात्मानौ ध्यायत इत्यर्थः ।

ईदृशस्य शम्भोर्महादेवस्य, शून्यस्य आकाशवन्निराकारतया शून्यप्रायस्य, ब्रह्मचैतन्यस्य, ईक्षणेन प्रागुक्तप्रकारेण दर्शनेन, घटितो निष्पादितः, लयो जीवात्मनः परमात्मनि लीनता यस्मिन् स चासौ ब्रह्मलयः परमात्मविषयकश्चेति स तथोक्तः शुद्धचैतन्यविषयक इत्यर्थः, समाधिर्ध्यानम्, वो युष्मान् सामाजिकान् पातु रक्षतु । समाधिकर्त्तृकरक्षणोक्त्या शम्भुकर्त्तृकरक्षणमेवाभिप्रेयत इति बोध्यम् ।

अत्र प्रथमचरणे लुप्तोपमालङ्कारः ।

स्रग्धरा वृत्तम्—"म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयम्" इति लक्षणात् ॥१॥

---

পর্য্যঙ্কের সংযোগস্থলের বন্ধনরজ্জুর ন্যায় দ্বিগুণিত সর্প যাঁহার জানুযুগলকে আলিঙ্গনবৎ বেষ্টন করিয়া রহিয়াছে ; শরীরের ভিতরে প্রাণাদি

अपि च, (क)

पातु वो नीलकण्ठस्य कण्ठः श्यामाम्बुदोपमः।
गौरीभुजलता यत्र विद्युल्लेखेव राजते ॥२॥

नान्द्यन्ते सूत्रधार. (१) (ख)। अलमनेन परिषत्कुतूहलविमर्द-

(क) अपि च अन्यच्च नान्द्यात्मकं वाक्यान्तरञ्च तदित्यर्थः।

पात्विति। श्यामो जलपूर्णत्वात् श्यामवर्णः अम्बुदो मेघ एव उपमा उपमानं यस्य सः, नीलः कालकूटविषतेजसा नीलवर्णः कण्ठो यस्य तस्य महादेवस्य, कण्ठो गलदेशः, वो युष्मान् सामाजिकान्, पातु रक्षतु। यत्र कण्ठे, गौर्य्याः पार्वत्याः भुजो लतेव सा, विद्युतो लेखा रेखा इव राजते स्वर्णवर्णत्वात् शोभते।

अत्र "नीलकण्ठस्य कण्ठः" इति लाटानुप्रासः, "श्यामाम्बुदोपम" इति आर्थी समासगतोपमा, "भुजलता" इति शम्भुकण्ठे लताया असम्भवात् लुप्तोपमैव न तु रूपकम्, "विद्युल्लेखेव" इति श्रौती समासगतोपमा च, इत्येतेषां परस्परनिरपेक्षतया संसृष्टिः।

पथ्यावक्त्रं वृत्तम्- "युजोर्जेन सरिद्भर्तुः पथ्यावक्त्रं प्रकीर्त्तितम्" इति लक्षणात् ॥२॥

পঞ্চ বায়ুকে অবরুদ্ধ করায় যাঁহার ইন্দ্রিয়সকল রুদ্ধ হইয়া গিয়াছে এবং তাহাতে বাহিরের সকল জ্ঞান নিবৃত্তি পাইয়াছে, যিনি তত্ত্বজ্ঞানবশতঃ নিজের আত্মাতেই নিরাকার পরমাত্মাকে দেখিতেছেন এবং উক্তরূপে শূন্যপ্রায় পরমাত্মার দর্শননিবন্ধন যাঁহার জীবাত্মা পরমাত্মাতে লীন হইয়া রহিয়াছে, সেই মহাদেবের পরমাত্মবিষয়ক ধ্যান, আপনাদিগকে রক্ষা করুক ॥১॥

(ক) অপি চ। নীলকণ্ঠ মহাদেবের নীলবর্ণমেঘের তুল্য কণ্ঠদেশ, আপনাদিগকে রক্ষা করুক, যে কণ্ঠদেশে বিদ্যুতের রেখার ন্যায় পার্বতীর বাহুলতা বিরাজ করিতেছে ॥২॥

---

(१) सूत्रधारः इत्यतः परमपि सूत्र इत्यधिकः पाठः क्वचित्।

कारिणा परिश्रमेण (ग)। एवमहमार्य्यमिश्रान् प्रणिपत्य विज्ञा-

(ख) नान्दान्त इति। स्तुत्याशीरन्यतरपरा वाक् नान्दी, तस्या अन्ते पाठावसाने, सूत्रधारः प्रधाननटः। आह्हेति अध्याहर्त्तव्याया. क्रियायाः कर्त्तृपदमेतत्। अन्यतापरमनुन्नेयम्। तथा च नन्दयति आनन्दयति सर्व्वान् देवादीन् आशिषा वा सभ्यान् इति इनन्तनन्द-धातोः पचादित्वादचि प्रज्ञादित्वात् स्वार्थे अणि च स्त्रियामीप्रत्ययात् नान्दीति रूपम्। तल्लक्षणन्तु साहित्यदर्पणे—

"आशीर्वचनसंयुक्ता स्तुतिर्यस्मात् प्रयुज्यते।
देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता॥
मङ्गल्य-शङ्ख-चन्द्राञ्ज-कोक-कैरवशंसिनी।
पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरुत॥"

तथा चात्र सर्वमङ्गलकारिणोर्दंराशिवयोः स्पष्टाभिधानात् मङ्गल्यत्वसिद्धम्, श्लोकद्वये अष्टानां पादानां सत्त्वादष्टपदत्वञ्चोन्नेयम्। तथाहि भरतनाट्यशास्त्रटीकायामभिनवगुप्तः— "पदानि श्लोकावयवभूतानि तिङन्तानि सुबन्तानि वा, श्लोकतुरीयांशपदानि वा, अवान्तर-रूपाणि वा" इति। नाट्यप्रदीपे च—

"श्लोकपादः पदं केचित् सुप्तिङन्तमथापरे।
परेऽवान्तरवाक्यैक-स्वरूपं पदमूचिरे॥"

सूत्रधारलक्षणन्तु—"नाटकीयकथासूत्रं प्रथमं येन सूच्यते।
रङ्गभूमिं समाक्रम्य सूत्रधारः स उच्यते॥"

(ग) ननु विपुलतया प्रधानभूतां द्वादशपदां नान्दीमपहाय कथमष्टपदा प्रयुक्तेत्याह अलमिति। परिषदः सभ्यगणस्य, यत् कुतूहलम् अभिनयदर्शनकौतुकम्, तस्य विमर्द-कारिणा विलम्बजनकतया व्याघातविधायिना, अनेन एतदधिकद्वादशपदनान्दीप्रयोगजनितेन, परिश्रमेणालम्। तथा च उक्तरूपाष्टपदनान्दीप्रयोगेणैव कर्त्तव्यमङ्गलाचरणनिर्वाहात् एतदधिकद्वादशपदनान्दीप्रयोगे केवलं परिषदः कौतुकहानिर्मम च परिश्रमाधिक्यं फल-मित्यतस्ततो विरम्यत इति भावः। परिषदमाह मनुः—

पयामि—यदिदं वयं मृच्छकटिकं नाम प्रकरणं प्रयोक्तुं व्यवसिताः ; एतत् कविः किल—(घ)

"त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्मपाठकः।
त्रयश्चाश्रमिणः पूर्वे परिषत् स्याद्दशावरा॥"

(घ) एवमिति। वेदोक्तविधिनिषेधाधीनाचारा आर्य्यास्तेषु मिश्रा प्रधानास्तान्, प्रणिपत्य नमस्कृत्य, एवं विज्ञापयामीत्यन्वयः। मृदो मृत्तिकायाः शकटिका क्षुद्रं शकटं यस्मिन्निति मृच्छकटिकम्। एतच्च परस्तात् व्यक्तीभविष्यति। नाम तदाख्यया प्रसिद्धम्, प्रकरणं तदाख्यं रूपकविशेषम्, प्रयोक्तुम् अभिनेतुम्, व्यवसिता उद्यता। एतस्य मृच्छकटिकनामकप्रकरणस्य, कविर्वर्णयिता रचयिता— द्विरदेन्द्रगतिः" इत्यादिना वक्ष्यमाणो नान्दीयते। आर्य्यमाहुः प्राञ्चः—

"कर्त्तव्यमाचरन् काममकर्त्तव्यमनाचरन्।
तिष्ठति प्रकृताचारे स वा आर्य्य इति स्मृतः॥"

"प्रधाने मिलिते मिश्रः" इति धरणिः।

साहित्यदर्पणे "नायिकानायकाख्याना संज्ञा प्रकरणादिषु" इत्युक्तेः प्रायिकत्वाभिप्रायात् "नाम कार्य्यं नाटकस्य गर्भितार्थप्रकाशकम्" इत्युक्त्यनुसारात् अस्य नाटकप्रकृतिकत्वाच्च मृच्छकटिकम् इति गर्भितार्थप्रकाशकमेव नाम निर्द्दिष्टम्। एतच्चास्माभिः साहित्यदर्पणटीकायामप्युक्तम्। प्रकरणलक्षणमाह तत्रैव—

"भवेत् प्रकरणे वृत्तं लौकिकं कविकल्पितम्।
शृङ्गारोऽङ्गी नायकस्तु विप्रोऽमात्योऽथवा वणिक्।
सापायधर्म्मकामार्थपरो धीरप्रशान्तकः॥"

---

(খ) নান্দীপাঠের পর সূত্রধার। (গ) সভাগণের কৌতুকনাশক অতিরিক্ত নান্দীপাঠের পরিশ্রম নিরর্থক। (ঘ) আমি সভামহোদয়গণকে প্রণাম করিয়া এইরূপ জানাইতেছি যে, আমরা এই যে মৃচ্ছকটিক-নামে প্রকরণ অভিনয় করিতে প্রবৃত্ত হইয়াছি, ইহার কবি—

द्विरदेन्द्रगतिश्चकोरनेत्रः परिपूर्णेन्दुमुखः सुविग्रहश्च।
द्विजमुख्यतमः कविर्बभूव प्रथितः शूद्रक इत्यगाधसत्त्वः ॥३॥

अपि च, (ङ)

ऋग्वेदं सामवेदं गणितमथ कलां वैशिकीं हस्तिशिक्षां
ज्ञात्वा शर्वप्रसादाद्व्यपगततिमिरे चक्षुषी चोपलभ्य।
राजानं वीक्ष्य पुत्रं परमसमुदयेनाश्वमेधेन चेष्ट्वा,
लब्ध्वा चायुः शताब्दं दशदिनसहितं शूद्रकोऽग्निं प्रविष्टः ॥४॥

द्विरदेन्द्रेति। द्विरदेन्द्रस्य हस्तिश्रेष्ठस्य गतिरिव गतिर्गमनं यस्य सः हस्तियूथपतिरिव मन्दगमन इत्यर्थः, चकोरः पक्षीव नेत्रे यस्य सः, परिपूर्ण इन्दुश्चन्द्र इव मुखं यस्य सः, शोभनो विग्रहः शरीरं यस्य सः, द्विजेषु क्षत्रियेषु मुख्यतमः स्वजातिधर्मपरायणत्वात् प्रधानतमः। न तु "ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः" इति वचनात् द्विजेषु ब्राह्मण-क्षत्रियवैश्येषु मुख्यतमः प्रधानतमो ब्राह्मण एवेति वाच्यम्, समरव्यसनी इति वक्ष्यमाणेन क्षत्रियधर्मेण समरव्यसनेन क्षत्रियत्वस्यैव निश्चयात्। तथा अगाधमसीमं सत्त्वं बलं यस्य सः, अतएव सूद्रति शत्रूनिति शूद्रकः पृषोदरादित्वात् साधुः, इति प्रथितः शूद्रक इति नाम्ना प्रसिद्ध इत्यर्थः, कविर्बभूव।

अत्र प्रथमाङ्के तिसृणां लुप्तोपमाना मिथोनिरपेक्षतया संसृष्टिः।

कालभाषिणी नाम वृत्तम्—"विषमे ससजा यदा गुरू चेत् सभरा येन तु कालभाषिणीयम्" इति लक्षणात् ॥३॥

(ङ) अपि च अन्यविधगुणभूषितश्चायमित्यर्थः। एवमुत्तरत्रापि।

ऋग्वेदमिति। शूद्रकः, ऋग्वेदम्, सामवेदम्, गणितम् अङ्कशास्त्रम्, कला नृत्यगीतादि-

---

শূদ্রকনামে প্রসিদ্ধ ছিলেন। তাঁহার গমন করীন্দ্রের ন্যায়, নয়ন চকোর পক্ষীর তুল্য, মুখ পূর্ণচন্দ্রের সমান এবং শরীর পরমসুন্দর ছিল এবং তিনি ক্ষত্রিয়দিগের মধ্যে প্রধান ও অমিতবলশালী ছিলেন ॥৩॥

चतुःषष्टिप्रकारं कलाशास्त्रम्, विशां वैश्यस्य धर्मिति वैशिकी कृषिवाणिज्यविद्या ताम्, अथ तथा हस्तिशिक्षा हस्तिभ्यो दैर्यशिक्षा हास्तिशास्त्रमित्यर्थः। अतएव च तत्र विशेषणेपश्चात् परत्वात् परवारणबाहुयुद्धलब्ध इति। ज्ञात्वा तत्तच्छिक्षकेभ्य अवगत्य शर्वस्य महादेवस्य प्रसादादनुग्रहात्, व्यपगते विनष्टे तिमिरसंज्ञाख्यो रोगो ययोस्ते तादृशी, चक्षुषी नयनद्वयम्, उपलभ्य पुनः प्राप्य च, आदौ द्वयोरेव नयनयोस्तिमिरो नाम रोगो जातः, परन्तु सेवासन्तुष्टशिवानुग्रहात् तद्रोगमुक्तं नयनयुगलं पुनः प्राप्येत्यर्थः, पुत्रं राजानम् आत्मनैव राज्ये अभिषिक्तं वीक्ष्य दृष्ट्वा, परमः साकल्येन महान्, समुदय उपकरणसादनं यस्य तेन, अश्वमेधेन तदाख्येन यागेन, इष्ट्वा यजनं कृत्वा, सामान्यव्यापारं प्रति विशेषव्यापारस्य कारणत्वाङ्गीकारादुपपत्तिः, अश्वमेधाख्यं यागञ्च कृत्वेत्यर्थः, दशदिनसहितं दशदिवसाधिकम्, शताब्दं शतवत्सरपरिमितम्, आयुर्जीवनकालं लब्ध्वा च, अग्निं चिताग्निं प्रविष्टो मृत इत्यर्थः।

स्रग्धरा वृत्तम्।

तिमिररोग उक्तो भावप्रकाशे—

"तिमिराख्यः स वै दोषश्चतुर्थपटलं गतः।
रुणद्धि सर्वतो दृष्टिं लिङ्गनाश इति क्वचित्॥"

ननु "नराश्वमेधौ मद्यञ्च कलौ वर्ज्या द्विजातिभिः" इति तिथितत्त्वधृतब्रह्मपुराणे "दीर्घकालं ब्रह्मचर्यं नरमेधाश्वमेधकौ" इत्याद्युद्वाहतत्त्वधृतबृहन्नारदीयपुराणे च कलावश्वमेधनिषेधात् शूद्रकस्य चापौराणिकत्वेन "चाणक्येनेव द्रौपदी" "यौगन्धरायण इवोदयनस्य राज्ञः" इति कलियुगीयस्य उदयनस्य चाणक्यस्य च उपमाविन्यासेन कलियुगीयत्वस्यैव निश्चयात् कथमुक्तं "अश्वमेधेन चेष्ट्वा" इति चेन्न, एतन्निषेधस्य अश्वमेधनिष्पादने सन्दिग्धशक्तिकपरत्वात् सन्दिग्धशक्तिकस्य चाश्वमेधानुष्ठानप्रवृत्तौ केवलानर्थपातस्यैव सम्भवात् निश्चितशक्तिकस्य तु तन्निषेधे हेत्वभावात्।

अथ "मङ्गलमारभ्य कविः कुर्यात्" इत्येवमादिवाक्येनालङ्कारिकैः मङ्गलाचरणादिकस्य सकलविषयस्यैव कवेरेव कर्त्तव्यतोपदेशात् मृतस्य तु कवेस्तत्करणासम्भवात् जीवतस्तु

अपि च,

समरव्यसनी प्रमादशून्यः ककुदं वेदविदां तपोधनश्च।
परवारणबाहुयुद्धलुब्धः क्षितिपालः किल शूद्रको बभूव ॥५॥

कलिकालजस्य क्षणदिनादिरूपेण निजायुष्कालनिरूपणासम्भवात् "लब्ध्वा चायुः शताब्दं दशदिनसहितं शूद्रकोऽग्निं प्रविष्टः" इत्युक्तिः कथमपि न सङ्गच्छते ; इति चेदत्र ब्रूमः—

दशदिनाधिकशताब्दमायुर्लब्ध्वा शूद्रके मृते राज्याभिषिक्तात् तदात्मजात् लिप्सित-धनलाभाशीकारमाशाय सम्पन्नदशातः परं दैववशात् दैन्यमापन्नः कश्चन कविप्रवरः शूद्रककर्तृकताप्रकारेण मृच्छकटिकं नामेदं प्रकरणं निर्माय तस्मै शूद्रकपुत्राय समर्पयामास। सम्भवति च धनार्थमपि काव्यनिर्माणम्। तथा चोक्तम्—"काव्यं यशसे अर्थकृते" इत्यादि। धावको नाम कविर्लक्षमुद्राविनिमयेन स्वकृतिं रत्नावली नाम नाटिकां श्रीहर्षाय राज्ञे ददाविति चालङ्कारिकैर्गीयते—"श्रीहर्षादेर्धावकादीनामिव" इति। न च रत्नावल्यामपि समुपलभ्यते तद्विनिमयवार्त्ता ; एवमिहापि। अपि च मध्याह्नदिन-करकिरणमध्यवर्त्तिनो जनस्य घनतमसाच्छन्नमहानिशाविभीषिकेव राजचक्रवर्त्तिनः शूद्रकस्य नितान्तनिःस्वचारुदत्तदशा कष्टेनैव कल्पनायामप्याविर्भवति ; सुखेनाविर्भवति तु स्वय-मेवानुभूयमानतया चारुदत्तवदेव सम्पन्नदशातः परं दैन्यमापन्नस्य जनस्य। सुतरामुक्तः प्रत्यय एव साधीयानिति सुधियः प्रमाणम्।

केचित्तु जीवन्नेव शूद्रको ज्योतिर्गणनाप्रत्ययात् "लब्ध्वा चायुः शताब्दम्" इत्यादिक-माह स्म। "प्रविष्टः" इति तु "अनागत." इतिवत् भविष्यति काले क्तप्रत्यय इत्याहुः।

परे तु परप्रक्षिप्तमिदमिति वदन्ति ॥४॥

---

(৬) আর, শূদ্রক ঋগ্বেদ, সামবেদ, অঙ্কশাস্ত্র, নৃত্যগীতাদি কলা-বিদ্যা, কৃষিবাণিজ্যবিদ্যা ও হস্তিশাস্ত্র জানিয়া, মহেশ্বরের অনুগ্রহে তিমিররোগবিহীন নয়নযুগল লাভ করিয়া, পুত্রকে রাজা দেখিয়া, বিপুল আয়োজনে অশ্বমেধযাগ করিয়া এবং এক শত বৎসর দশদিন আয়ু পাইয়া, পরে অগ্নিতে প্রবেশ করিয়াছিলেন ॥৪॥

अस्याञ्च तत्कृतौ—(च)

अवन्तिपुर्य्यां द्विजसार्थवाहो युवा दरिद्रः किल चारुदत्तः।
गुणानुरक्ता गणिका च यस्य वसन्तशोभेव वसन्तसेना ॥६॥

पुनरपि शूद्रकमेव गुणान्तरेण विशिनष्टि समरेति। शूद्रक किल शूद्रक इति प्रसिद्धः क्षितिपालो राजा समरे व्यसनी आसक्तिमान्। एतेन महावीर इति ध्वनितम्। वेदविदां ककुदं प्रधानं, तप एव धनं धनवदादरणीयं यस्य स, परवारणैः शत्रुपक्षीयहस्तिभिः सह बाहुयुद्धे लुब्धः अभिलाषी च बभूव।

एतच्च श्लोकत्रयं भारतीवृत्तेरङ्गम्, कविप्रशंसया तत्प्रबन्धस्यापि प्रशस्यतासूचनेन तत्र सभ्यानां रुच्युत्पादनात्। यथा साहित्यदर्पणे—"उन्मुखीकारः प्रशंसातः प्ररोचना।"

"प्राधान्ये राजलिङ्गे च वृषाङ्गे ककुदोऽस्त्रियाम्" इत्यमरः।

शालिनी वृत्तम् ॥५॥

(च) अस्यामिति। शूद्रककृते अस्मिन् प्रकरणे इत्यर्थः।

प्रागेव सभ्यानां सामान्यतो वृत्तान्तावबोधाय नायकं नायिकां रसञ्च सूचयितुमाह अवन्तीति। अवन्तिपुर्य्याम् उज्जयिन्याम्, सार्थं सङ्घिनं वणिक्सम्प्रदायं वहतीति सार्थ-वाहो वणिक् द्विजो ब्राह्मणश्चासौ सार्थवाहश्चेति द्विजसार्थवाहो वाणिज्यकारी ब्राह्मण इत्यर्थः। दरिद्रः, चारु देयादिति चारुदत्तः, "तिक्कृतौ संज्ञायामाशिषि" इति क्तप्रत्ययान्तः, चारुदत्तो नाम युवा आसीदिति शेषः। यस्य च चारुदत्तस्य, वसन्तस्य ऋतोः पुष्पादिभिः

---

এবং সেই রাজা শূদ্রক যুদ্ধোৎসাহী, প্রমাদবিহীন, বেদজ্ঞশ্রেষ্ঠ, তপস্বী ও পরপক্ষীয় হস্তীর সঙ্গে বাহুযুদ্ধাভিলাষী ছিলেন ॥৫॥

(চ) তাঁহার কৃত এই মৃচ্ছকটিকপ্রকরণে—

উজ্জয়িনীনগরে চারুদত্তনামে, ব্রাহ্মণজাতীয় অথ চ বাণিজ্যব্যবসায়ী এক দরিদ্র যুবক ছিলেন এবং বসন্তকালের শোভার ন্যায় বসন্তসেনানামে একটি বেশ্যা, সেই চারুদত্তের গুণে অনুরক্ত হইয়াছিল ॥৬॥

**तयोरिदं सत्सुरतोत्सवाश्रयं नयप्रचारं व्यवहारदुष्टताम्।**
**खलस्वभावं भवितव्यतां तथा चकार सर्व्वं किल शूद्रको नृपः ॥७॥**

कृता शोभा इव वसन्तस्य उन्मादकस्य ऋतोः सेना इव वसन्तसेना तदाख्या, गुणैः सौन्दर्य्यौदार्य्यादिना अनुरक्ता, गणिका वेश्या, सा तु गणिकाकन्यात्वात् न पुनर्गणिकाचारित्रादिति बोध्यम्।

अत्र श्रौती उपमालङ्कारः।

उपेन्द्रवज्रा वृत्तम्—"उपेन्द्रवज्रा प्रथमे लघौ सा" इति लक्षणात् ॥६॥

तयोरिति। इदं मृच्छकटिकं नाम प्रकरणम्, तयोर्वसन्तसेनाचारुदत्तयोः सत् साधु, यत् सुरतं रमणं तदेव उत्सवः आमोदव्यापारः स एव आश्रयो विषयो यस्य तत्। अत्र च शूद्रको नृपः, नयस्य नीतेः प्रचारं परस्तात् प्रायेण सर्व्वत्रैव प्रकाशम्, व्यवहारस्य नवमाङ्के चारुदत्तशकारयोर्विवादविचारस्य दुष्टता सृतस्त्रीशरीरमपरीक्ष्यैव निर्वाहितत्वात् असमीचीनताम्, खलानां शकारादीनां स्वभावं चरित्रम्, तथा भवितव्यताम् आर्य्यकराजत्वचारुदत्तमुक्तिप्रभृतिघटिकां नियतिम्, एतत् सर्वं चकार रचितवान्। अत्रान्यं न कविना न किञ्चित् कृतमित्यर्थः।

अत्र प्रथमचरणात् परम् 'अत' इत्यनभिधानात् न्यूनपदतादोषः, स तु 'इहानयोः सत्सुरतोत्सवाश्रयं' इति प्रथमचरणपाठेन समाधेयः। "द्विजानामसवर्णासु कन्यासूपयमस्तथा" इत्यादिकमुद्धाहृतस्वभृतमादित्यपुराणादि वचनजातमनार्षमेव, किन्तु समाजगतिदर्शिना केनचित् प्रक्षिप्तम्। आर्षत्वेऽपि शूद्रकसमये यावत् सामाजिकैस्तन्न परिगृहीतम्। अतएव मालविकाग्निमित्रेऽपि "देव्या वर्णावरो भ्राता" इति दृश्यते। इतश्च वसन्तसेनाया असवर्णत्वेऽपि ब्राह्मणस्य चारुदत्तस्य तत्परिणयो न दोषाय। सुतराञ्च गान्धर्वविवाहप्रयोजकमिव तयोर्भाविविवाहप्रयोजकं सुरतं निर्द्दोषं परस्परगुणानुरागप्रयुक्तत्वाच्च साध्वेवेति 'सत्सुरतोत्सवाश्रयम्' इत्युक्तमिति दिक्।

वंशस्थविलं वृत्तम्—"वदन्ति वंशस्थविलं जतौ जरौ" इति लक्षणात् ॥७॥

---

রাজা শূদ্রক সেই চারুদত্ত ও বসন্তসেনার নির্দোষ রমণোৎসব,

परिक्रम्यावलोक्य च। अये! शून्येयमस्मत्सङ्गीतशाला। क्व नु गताः कुशीलवा भविष्यन्ति?। विचिन्त्य। आं ज्ञातम्। (क)

शून्यमपुत्रस्य गृहं चिरशून्यं नास्ति यस्य सन्मित्रम्।
मूर्खस्य दिशः शून्याः, सर्व्वं शून्यं दरिद्रस्य ॥८॥

(क) परीति। परिक्रम्य कुशीलवानामन्वेषणार्थं कियन्तं पादन्यासं कृत्वा। अये इति विषादसूचकमव्ययम्। कुत्सितं शीलमेषामस्तीति कुशीलवा नटाः, केशादित्वात् वप्रत्ययः। आमिति स्मरणार्थमव्ययम्।

"अये क्रोधे विषादे च" इत्यादिमेदिनी। "भरता इत्यपि नटाश्चारणाश्च कुशीलवाः" इत्यमरः। "आ स्मृतौ चावधारणे" इति विश्वः।

शून्यमिति। अपुत्रस्य अजातपुत्रस्य मृतपुत्रस्य वा जनस्य, गृहं शून्यं सर्वपदार्थरहितमिव प्रतिभातीत्यर्थः चित्तप्रफुल्लताया अभावादिति भावः। एवं सर्वत्र। तथा तदेव गृहम्, चिरशून्यं यावज्जीवमेव शून्यम्, यस्य जनस्य सन् मित्रं साधुः सखा नास्ति तथा च अविवाहितावस्थायामपुत्रस्यापि गृहं जनकजनन्यादिभिः पूर्णमेव प्रतिभाति तत्रैव मनःस्फूर्त्तिसत्त्वात्, किन्तु यस्य सन्मित्रं नास्ति तस्य पुत्रादिपरिपूर्णमपि गृहं चिरकालमेव शून्यमिव प्रतिभाति मनःस्फूर्त्त्यभावादिति भावः। मूर्खस्य दिशः स्वभवनं विना अन्या दिशः शून्याः आत्मनः सर्वविधयोग्यताया अभावेन सर्वत्रैवावलम्बनाभावादित्याशयः। दरिद्रस्य तु सर्वमेव गृहं दिगादिकञ्च शून्यम्, निर्धनतया सर्वत्रैव मनःस्फूर्त्त्यभावादित्यभिप्रायः। एवञ्च ममापि निर्धनतया वेतनलाभाभावात् कुशीलवाः स्वेच्छाचारिणः सन्तः कार्य्यकाल एव यथेष्टस्थानं गता इति श्लोकाशयः।

अत्र चतुर्ष्वेव चरणेषु चतस्रः प्रतीयमानोत्प्रेक्षाः, तथा "आं ज्ञातम्" इत्यनेन दरिद्रः प्रस्तुतः अपुत्रादयश्चाप्रस्तुताः इत्येतेषां शून्यतारूपैकगुणसम्बन्धात् दीपकालङ्कारः। तथा च

---

নীতির প্রচার, ব্যবহারের (মোকদ্দমার) দোষ, খলের চরিত্র এবং দৈব—এই সমস্তই নিবদ্ধ করিয়া গিয়াছেন ॥৭॥

**कृतञ्च सङ्गीतकं मया। अनेन चिरसङ्गीतोपासनेन ग्रीष्मसमये प्रचण्डदिनकरकिरणोच्छुष्कपुष्करवीजमिव प्रचलिततारके क्षुधा ममाक्षिणी खटखटायेते (ज)। तद्यावद्गृहिणीमाहूय**

"अप्रस्तुतप्रस्तुतयोर्दीपकन्तु निगद्यते" इति साहित्यदर्पणलक्षणे अप्रस्तुतप्रस्तुतयोः इति प्रत्येकगतं कत्वं न द्वित्वमविवक्षितम्, तथा तत्र धर्मान्तर्गतगुणस्तु द्रव्यभिन्नो हृतिमन्यतो ग्राह्य इत्युक्तमस्माभिस्तत्टीकायाम्। एवमपुत्राद्यपेक्षया दरिद्रस्य असत्त्वाक्षेपेण न्यूनत्वात् व्यतिरेकश्च अमीषां परस्परनिरपेक्षतया संसृष्टिः।

किन्तु एकस्यैव शून्यशब्दस्य पुनः पुनरुपादानेऽपि नानवीकृतत्वदोषः, एकविधशब्दप्रयोगस्यैवात्र वैचित्र्याधायकतया रसापकर्षजनकत्वाभावेन सहृदयानामुद्वेगाजनकत्वात्।

आर्य्या जातिः—"यस्याः पादे प्रथमे द्वादशमात्रास्तथा तृतीयेऽपि।
अष्टादश द्वितीये चतुर्थके पञ्चदश सार्य्या॥"

इति लक्षणात्॥८॥

(ज) कृतञ्चेति। चिरं दीर्घकालं सङ्गीतस्य उपासनेन करणेन तत्परिश्रमेणेत्यर्थः। प्रचण्डाः प्रखरा ये दिनकरकिरणास्तैरुच्छुष्कं नितान्तशुष्कं यत् पुष्करं पद्मं तस्य बीजमिव। प्रचलिते घूर्णिते तारके ताराद्वय ययोस्ते। अक्षिणी नयनद्वयम्। खटखटायेते खटखटं कुरुतः। अत्रोपमालङ्कारः।

---

(छ) (ইতস্ততঃ কয়েকবার পদক্ষেপপূর্ব্বক দর্শন করিয়া)। হায়! আমাদের এই সঙ্গীতশালা যে শূন্য দেখিতেছি। (তা হ'লে) নটগণ কোথায় গেল? (চিন্তা করিয়া) ও! বুঝিতে পারিয়াছি।

অপুত্রক ব্যক্তির গৃহ শূন্য, যাহার ভাল মিত্র নাই তাহার গৃহ চিরকালই শূন্য। মূর্খের সমস্ত দিক্ই শূন্য, আর দরিদ্রের সকলই শূন্য॥৮॥

(জ) আমি সঙ্গীত করিয়াছি। দীর্ঘকাল এই সঙ্গীত করায়, গ্রীষ্মকালে প্রচণ্ড সূর্য্যের কিরণে শুষ্ক পদ্মের বীজের ন্যায় আমার নয়নযুগল ক্ষুধায় খট্ খট্ করিতেছে এবং তারা দুইটী ঘুরিতেছে।

पृच्छामि, अस्ति किञ्चित् प्रातराशो नवेति (झ)। एषोऽस्मि भोः! कार्य्यवशात् प्रयोगवशाच्च प्राकृतभाषी संवृत्तः (ञ)।

अविद अविद भो! चिरसंगीदोवासणेण सुक्खपोक्खरणालाइं विअ मे बुभुक्खाए मिलाणाइं अङ्गाइं, ता जाव गेहं गदुअ आणामि, अत्थि किंपि कुडुम्बिणीए उववादिदं ण व त्ति (ट)। परिक्रम्याव-

(ट) अविद अविद भोः! चिरसङ्गीतोपासनेन शुष्कपुष्करनालानीव मे बुभुक्षया म्लानानि अङ्गानि। तद्यावत् गृहं गत्वा जानामि अस्ति किमपि कुटुम्बिन्या उपपादित

(झ) तदिति। प्रातरश्यत इति प्रातराशः प्रातःकालीयखाद्यम्, पूर्वाह्णपक्वान्नादिर्मध्याह्न-भोजनेनैव निःशेषितत्वात् इदानीञ्च रात्रियामार्द्धकालेऽपि रात्रिपाकसम्पन्नताया असम्भवात् प्रातःकाले यच्चिपीटकादिकं भुज्यते तदस्ति न वेत्यर्थः।

(ञ) एष इति। भो इति सभ्यानां सम्बोधनम्। कार्य्यवशात् स्त्रिया सार्द्धमालाप-रूपप्रयोजनवशात्। संस्कृतभाषाव्यवहारैः सा यदि सर्वं नावबुध्येतेति भावः। प्रयोग-वशाच्च "कार्य्यतश्चोत्तमादीनां कार्य्यो भाषाविपर्य्ययः" इति दर्पणकृदादिभिरालङ्कारिकैः प्रयो-जनविशेषे सति उत्तमादीनामपि पात्राणां भाषान्तरव्यवहारनियोगवशाच्चेत्यर्थः।

(ट) अविदेति। अविदेति प्राकृतादिभाषायां खेदविस्मयसूचकमव्ययम्। तस्याति-शये द्विरुक्तिः। शुष्कं यत् पुष्करं पद्मं तस्य नालानि दण्डानि। बुभुक्षया क्षुधया। कुटु-म्बिन्या भार्य्यया।

"भार्य्या जायाथ पुंभूम्नि दाराः स्यात्तु कुटुम्बिनी" इत्यमरः।

---

(ঝ) অতএব গৃহিণীকে ডাকিয়া জিজ্ঞাসা করি—"প্রাতঃকালের খাদ্য কিছু আছে কিনা"। (ঞ) সভ্যমহাশয়গণ! প্রয়োজন ও নিয়মবশতঃ এই আমি প্রাকৃতভাষাভাষী হইলাম।

(ট) হায়! হায়! দীর্ঘকাল সঙ্গীত করায় আমার অঙ্গসমূহ শুষ্ক পদ্মের নালের ন্যায় ক্ষুধায় ম্লান হইয়া গিয়াছে। অতএব ঘরে যাইয়া 'জানি,

लोक्य च। एदं तं अम्हाणं गेहं, ता पविसामि। प्रविश्यावलोक्य च। हीमाणहे! किं णु क्खु अम्हाणं गेहे अवरं विअ संविहाणअं वट्टदि। आआमितण्डुलोदअप्पवाहा रच्छा, लोह-कडाह-परि-वत्तण-कसनमरो किदविसेसआ विअ जुअदी अहिअदरं सोहदि भूमी। सिणिद्धेण गन्धेण उद्दीवन्तो विअ अहिअं वाधेदि मं बुभुक्खा ता किं पुव्वविहिदं णिहाणं उववस्सं भवे? आदु अहं ज्जेव बुभुक्खादो ओदणमअं जीअलोअं पेक्खामि (ठ)। णत्थि

न वेति। (ठ) इदं तदस्माकं गृहम्, तत् प्रविशामि। आश्चर्य्यम्! किं नु खलु अस्माकं गृहे अपरमिव संविधानकं वर्त्तते। आयामितण्डुलोदकप्रवाहा रथ्या, लौहकटाह-परि-वर्त्तन-कृष्णसारा कृतविशेषका इव युवती अधिकतरं शोभते भूमिः। स्निग्धेन गन्धेन उद्दीप्यमानेव अधिकं बाधते मां बुभुक्षा। तत् किं पूर्वविहितं निधानम् उपपन्नं

(ठ) इदमिति। संविधानकम् आयोजनम्। स्वार्थे कप्रत्ययः। आयामिनः सुदीर्घाः दूरगामिनः तण्डुलोदकानां तण्डुलप्रक्षालनजलानां प्रवाहा यस्यां सा लौह-कटाहानां परिवर्त्तनेन चुल्लीभ्य आनीय स्थापनेन कृष्णः कृष्णवर्णः सारः प्रधानांशो यस्याः सा अतएव कृतौ विशेषकौ मसीतिलकौ यस्याः सा तादृशी युवतीव। अतोपमालङ्कारः। उद्दीप्यमानेव वर्द्धमानेव। पूर्वेण पूर्ववर्त्तिना केनाचित् जनेन विहितं कृतं भूगर्भे प्रोथितमित्यर्थः, निधानं निधिः धनभाण्डमिति यावत्, उपपन्नं लब्धम्। निधिलाभेऽपि आत्मीयभोजनादिभिरुत्सवः क्रियते लोकैरिति हि रीतिः। ओदनमयम् अन्नमयम्।

যে, গিন্নী কিছু তৈয়ারী করিয়া রাখিয়াছে কি না। (ঠ) (ইতস্ততঃ কয়েক-বার পদক্ষেপপূর্ব্বক দর্শন করিয়া) এই আমাদের সেই ঘর, অতএব প্রবেশ করি। (প্রবেশপূর্ব্বক দর্শন করিয়া) কি আশ্চর্য্য! আমাদের বাড়ীতে অন্য কোন সমারোহ উপস্থিত হইয়াছে নাকি? চাউল ধোয়া জলের ধারা, রাস্তার বহুদূরে চলিয়াছে; লোহার কড়ার কালী লাগায়

किल पादरासो अम्हाणं गेहे। पाणाच्चअं वाधेदि मं बुभुक्खा। इध सव्वं णवं विअ संविहाणअं वट्टति। एक्का वस्सअं पीसेदि, अवरा सुमणाइं गुम्फेदि (ड)। विचिन्त्य। किं खेदं। भोदु, कुडुम्बिणीं सद्दाविअ परमत्थं जाणिस्सं। नेपथ्याभिमुखमवलोक्य। अज्जे! इदो दाव। (ढ)

भवेत्? अथवा अहमेव बुभुक्षातः ओदनमयं जीवलोकं पश्यामि। (ड) नास्ति किल प्रातराशोऽस्माकं गृहे। प्राणात्ययं वाधते मां बुभुक्षा। इह सर्वं नवमिव संविधानकं वर्त्तते। एका वर्णकं पिनष्टि, अपरा सुमनसः गुम्फति। (ढ) किन्नु इदम्। भवतु, कुटुम्बिनीं शब्दायित्वा परमार्थं ज्ञास्यामि। आर्य्ये! इतस्तावत्।

(ड) नास्तीति। प्राणानामत्ययो विनाशो यस्मिन् कर्म्मणि तद्यथा तथा। संविधानकम् आयोजनम्। एका काचित् स्त्री वर्णकं हरिद्रादिरञ्जकद्रव्यम्, पिनष्टि चूर्णयति। सुमनसः कुसुमानि गुम्फति ग्रथ्नाति।

(ढ) किन्नु इति। कुटुम्बिनी भार्य्याम्, शब्दायित्वा आहूय परमार्थं यथार्थवृत्तान्तम्। "वाच्यो नटीसूत्रधारावार्य्यनाम्ना परस्परम्" इति साहित्यदर्पणात् आर्य्ये इति नट्याः सम्बोधनम्। इत आगम्यतामिति शेषः।

ভূমিখানি কৃষ্ণতিলকধারী যুবতীর ন্যায় অধিক শোভা পাইতেছে, ক্ষুধানল স্নিগ্ধগন্ধে উদ্দীপিত হইয়া আমাকে অধিক পীড়া দিতেছে। তবে কি পূর্ব্ব কোন ব্যক্তির রক্ষিত ধনভাণ্ডার পাওয়া গিয়াছে? না, আমিই ক্ষুধার জ্বালায় জগৎটাকে অন্নময় দেখিতেছি। (ড) আমাদের ঘরে প্রাতঃকালের খাদ্য কিছু নাই। এদিকে ক্ষুধা আমাকে এত পীড়া দিতেছে যে, প্রাণ যেন বাহির হইয়া যাইতেছে। এখানে সমস্তই যেন নূতন আয়োজন হইয়াছে। একটী স্ত্রীলোক হরিদ্রা চূর্ণ করিতেছে, অপর একটী

नटी। प्रविश्य। अज्ज! इअम्हि। (ण)

सूत्र। अज्जे! साअदं दे?। (त)

नटी। आणवेदु अज्जो, को णिओओ अणुचिट्ठीअदुत्ति। (थ)

सूत्र। अज्जे!। चिरसङ्गीदोवासणेण इत्यादि पठित्वा। अत्थि किं पि अम्हाणं गेहे असिदव्वं ण वेत्ति। (द)

(ण) आर्य्ये। इयमस्मि। (त) आर्य्ये। स्वागतं ते?।

(थ) आज्ञापयतु आर्य्यः, को नियोगः अनुष्ठीयतामिति।

(द) आर्य्ये! अस्ति किमपि अस्माकं गेहे अशितव्यं न वेति।

(ण) नटीति। इयमहम् अस्मि आगतास्मीत्यर्थः।

(त) सूत्रेति। स्वागतं सुखेनागमनं किमिति काकुः। आदरप्रदर्शनार्थोक्तिरियम्।

(थ) नटीति। नियोगो भवत आदेशः अनुष्ठीयतां सम्पाद्यतां मयेति शेषः इति आज्ञापयतु इत्यन्वयः।

(द) सूत्रेति। अशितव्यं भोक्तव्यम्।

ফুলের মালা গাঁথিতেছে। (ঢ) (চিন্তা করিয়া) এ ব্যাপারটা কি? হউক, গিন্নীকে ডাকিয়া যথার্থ বৃত্তান্ত জানিব (নেপথ্যের দিকে দৃষ্টিপাত করিয়া) আর্য্যে! এদিকে [আইস]।

[ণ] নটী। [প্রবেশ করিয়া] আর্য্য! এই আমি [আসিয়াছি]।

[ত] সূত্র। আর্য্যে! তোমার শুভাগমন ত?।

[থ] নটী। আপনি আদেশ করুন, আমি আপনার কোন্ নিয়োগ অনুষ্ঠান করিব।

[দ] সূত্র। আর্য্যে! [দীর্ঘকাল সঙ্গীত করায় ইত্যাদি বলিয়া] আমাদের ঘরে কিছু খাদ্য আছে কিনা?।

नटी। अज्ज ! सव्वं अत्थि। (ध)

सूत्र। किं किं अत्थि ?। (न)

नटी। तं जधा गुड़ोदणं, घिअं, दहीं, तण्डुलाइं, अज्जेण अत्तव्वं रसाअणं सव्वं अत्थि त्ति। एव्वं दे देवा आसासेदु। (प)

सूत्र। किं अम्हाणं गेहे सव्वं अत्थि, आदु परिहसित ?। (फ)

(ध) आर्य्य ! सर्बमस्ति। (न) किं किमस्ति ?।

(प) तद्यथा—गुडौदनम्, घृतम्, दधि, तण्डुला:, आर्य्येण अत्तव्यं रसायनम्, सर्बमस्तीति। एव ते देवा आशासताम्।

(फ) किमस्माकं गृहे सर्बमस्ति ? अथवा परिहससि ?।

(प) नटीति। गुडश्च ओदनमन्नञ्चेति गुडौदनम्। "व्यञ्जनविशेषकाणाम्" इति समाहारद्वन्द्वे नपुंसकत्वम्। अथवा गुडयुक्तमोदनं गुडौदनम्, अत्तव्य भोक्तव्यम्, रसाना स्वादुरसानाम्, अयनम् आश्रयीभूतं पायसपिष्टकादि। इत्यादिकं सर्बमस्तीत्यर्थं। ते तव सम्बन्धे देवा: एवम् एतेषामुक्ताना द्रव्यानामस्तित्वम्, आशासताम् आशीर्वादविषयीकुर्वन्ताम्। एवमित्यादिकन्तु स्वगतवदुक्तमिति बोध्यम्। अन्यथा सूत्रधारस्य नास्तित्वप्रत्यय: स्यात्।

---

[ध] आर्य्य ! समस्তই আছে।

[न] সূত্র। কি কি আছে ?।

[प] নটী। তাহা শুনুন—গুড, ভাত, ঘী, দই, চাউল এবং আপনার যাহা যাহা খাদ্য, সেই সব পীঠে পায়সপ্রভৃতি আছে। দেবতারা আপনাকে এইরূপ আশীর্বাদ করুন।

(ফ) সূত্রধার। কি, আমাদের ঘরে সব আছে ? না পরিহাস করিতেছ !।

नटी। स्वगतम्। परिहसिस्सं दाव। प्रकाशम्। अज्ज! अत्थि आवणो। (ब)

सूत्र। सक्रोधम्। आः अणज्जे! एव्वं दे आसा छिज्जिस्सदि अभावं अ गमिस्ससि; जं दाणीं अहं वरण्डलम्बुओ विअ दूरं उक्खिविअ पाडिदो। (भ)

नटी। मरिसेदु मरिसेदु अज्जो। परिहासो क्खु मए किदो। (म)

(ब) परिहसिष्यामि तावत्। आर्य्य! अस्ति आपणं।

(भ) आः अनार्य्ये! एवं ते आशा छेत्स्यति, अभावञ्च गमिष्यसि, यदिदानीमहं वरण्डलम्बुक इव दूरमुत्क्षिप्य पातितः।

(म) मृष्यतु मृष्यतु आर्य्यः। परिहासः खलु मया कृतः।

(ब) नटीति। आपणं पण्यविक्रयगृहं। न तु स्वगृहं इत्याशयः।

(भ) सूत्रेति। एवमित्थम्। छेत्स्यति छिन्ना भग्ना भविष्यति। अकर्म्मकत्वविवक्षा। अभावम् एवंविधानां द्रव्याणामिति शेषः, गमिष्यसि प्राप्स्यसि। वरण्डलम्बुकी गुटिका। तथा च यथा खेलाविशेषे गुटिका उत्थाप्य पात्यते, त्वयापि आशां दत्वा पुनरहं निराशः कृत इति भावः। पृथ्वीधरस्तु वरण्डो दीर्घकाष्ठं तस्य लम्बुकस्तत्प्रान्तनिबद्धो मृत्तिकास्तूपः। स हि द्रोण्यां पानीयोद्धारे दूरमुत्थाप्य अधः पात्यते इत्याह।

(ব) নটী। (স্বগত) পরিহাস করিব। (প্রকাশ্য) আর্য্য! দোকানে আছে।

(ভ) সূত্রধার। (ক্রোধের সহিত) আঃ অনার্য্যে! তোর আশাও এইভাবে ছিন্ন হইবে এবং তুইও এই সব জিনিষের অভাব অনুভব করিবি। যে হেতু, তুই এখন আমাকে দোলফুলখেলার গুটীর মত দূরে উঠাইয়া ফেলিয়া দিয়াছিস।

सूत्र। ता किं उण इदं णवं विम संविहाणमं वट्टदि, एक्का वम्मअं पीसेदि, अवरा सुमनाओ गुम्फेदि, इअं अ पञ्चवस्सकुसुमोवहारसोहिदा भूमी। (य)

नटी। अज्ज! उववासो गहिदो। (र)

सूत्र। किंणामधेओ अअं उववासो?। (ल)

नटी। अहिरूववदो णाम। (व)

(य) तत् किं पुनरिदं नवमिव संविधानकं वर्त्तते? एका वर्णकं पिनष्टि, अपरा सुमनसो गुम्फति, इयञ्च पञ्चवर्णकुसुमोपहारशोभिता भूमि।

(र) आर्य्य! उपवासो गृहीतः।

(ल) किं नामधेयोऽयमुपवासः।

(म) नटीति। क्षम्यतां क्षम्यताम्।

(य) सूत्रेति। पञ्चवर्णानां रक्त-नील-पीत-कृष्ण-शुभ्राणां कुसुमानाम्, उपहारेण निक्षेपेण शोभिता।

(र) नटीति। उपवास उपवासात्मकं व्रतम्।

(व) नटीति। अभिरूपः सुन्दरः पतिर्य्यस्मात् सः। अनेनोपवासेन पतिः सुन्दरो भवतीत्यर्थः। एतेन सूत्रधारस्य कुरूपत्वं सूचितम्।

(म) নটী। আর্য্য! ক্ষমা করুন ক্ষমা করুন। আমি পরিহাসই করিয়াছি।

(য) সূত্রধার। তবে এই সব যেন নূতন আয়োজন হইয়াছে কেন? একজন হরিদ্রা চূর্ণ করিতেছে, অপরে ফুলের মালা গাঁথিতেছে এবং পাঁচ রঙ্গের ফুল ছড়াইয়া দেওয়ায় এই জায়গাখানি বেশ দেখা যাইতেছে।

(র) নটী। আর্য্য! আমি একটি উপবাস আরম্ভ করিয়াছি।

(ল) সূত্রধার। এই উপবাসের নাম কি?।

सूत्र। अज्जे ! इहलोइओ, आदु पारलोइओ ?। (ग्र)

नटी। अज्ज ! पारलोइओ। (ष)

सूत्र। सरोषम्। पेक्खन्तु पेक्खन्तु अज्जमिस्सा, ममकेरकेण भत्तपरिव्वएण (१) पारलोइओ भत्ता अण्णेसीअदि। (स)

(व) अभिरूपपतिर्नाम।

(ग्र) आर्य्ये ! इहलौकिकः, अथवा पारलौकिकः ?।

(ष) आर्य्य ! पारलौकिकः।

(स) प्रेक्षन्तां प्रेक्षन्ताम आर्य्यमिश्राः, मदीयेन भक्तपरिव्ययेन पारलौकिकी भर्त्ता अन्विष्यते।

---

(ग्र) सूत्रेति। इहलोके भव इहलौकिकः। "क्वचिदुत्तरपदस्य" इति परपदे वृद्धिः। ऐहिक एव पत्यौ अभिरूपतासम्पादक इत्यर्थः। परलोके भव इति पारलौकिकः। "क्वचिदुभयपदस्य" इत्युभयपद एव वृद्धिः। जन्मान्तरीयपत्यन्तरे अभिरूपताप्रयोजक इति तात्पर्य्यम्।

(स) सूत्रेति। भक्तपरिव्ययेन अन्नव्ययेन। भक्ताना मदीयतया तद्व्ययस्यापि मदीयत्वमेवेति सामानाधिकरण्योपपत्तिः। भर्त्ता अभिरूपाकृतिरिति शेषः। यदीयं द्रव्यं तस्यैवोपकारकरणं न्याय्यमिति मदीयभक्तव्ययेन जन्मान्तरीयपत्यन्तरस्य उपकार-चिकीर्षा नितरामेवान्याय्येति भावः।

---

(ব) নটী। ইহার নাম অভিরূপপতি।

[শ] সূত্রধার। আর্য্যে! ইহার ফল কি ইহলোকেই হইবে ? না পরলোকে ?।

[ষ] নটী। আর্য্য! পরলোকে হইবে।

[স] সূত্রধার। [ ক্রোধের সহিত ] মহাশয়গণ! দেখুন দেখুন। আমার অন্ন ব্যয় করিয়া পরলোকের [সুন্দর] স্বামী খুঁজিতেছে।

---

(१) मदरएण भत्तपरिव्वएण।

नटी। अज्ज! पसीद पसीद। तुमं ज्जेव मम जम्मन्तरे वि भत्ता भविस्ससि त्ति। (१) (ङ)

सूत्र। अअं उववासो केण दे उवदिट्ठो ?। (२) (च)

नटी। अज्जस्स ज्जेव पिअवअस्सेण चुसवुड्ढेण। (३) (क)

सूत्र। सकोपम्। आः दासीए पुत्ता चुसवुड्ढा! कदा णु क्खु तुमं कुविदेण रसा पालएण णववहुकेसकलावं विअ सुअन्धं (४) कपिज्जन्तं पेक्खिस्सम्। (ख)

(ङ) आर्य्ये। प्रसीद प्रसीद। त्वमेव मम जन्मान्तरेऽपि भर्त्ता भविष्यसीति।

(च) अयमुपवासः केन ते उपदिष्टः ?।

(क) आर्य्यस्यैव प्रियवयस्येन चूर्णवृद्धेन।

(ङ) नटीति। त्वमेवेति। "पूर्वजन्मनि या विद्या पूर्वजन्मनि यद्धनम्। पूर्वजन्मनि या नारी अग्रे धावति धावति॥" इति स्मरणादित्याशयः। इति अतः तवैवाभिरूपता-सम्पादकत्वान्न मम अन्याय्याचरणमिति भावः।

(क) नटीति। आर्य्यस्यैव न पुनर्मम, प्रियवयस्येन, न तु शत्रुणा, अतो न प्रतारणायाः सम्भावनेति भावः। चूर्णेन इष्टकादिचूर्णकरणेन चूर्णविक्रयेण वा वृद्धो वृद्धिमुन्नतिं प्राप्त इति यथाकथञ्चित् व्युत्पत्तिः।

[ङ] নটী। আর্য্য। প্রসন্ন হউন প্রসন্ন হউন। পরলোকেও আপনিই আমার স্বামী হইবেন।

[চ] সূত্রধার। তোমাকে এই উপবাস করিতে কে উপদেশ দিয়াছে ?।

[ক] নটী। আপনারই প্রিয় সখা চূর্ণবৃদ্ধ।

(१) ··भविस्ससि त्ति उववसिदह्मि। (२) अध अअं उववासो केण उवदिट्ठो।

(३) चुसवुड्ढेण। (४) केसहत्थं विअ समुअन्धं।

নটী। পসীদদু অজ্জো! অজ্জস্স জ্জে ব পারলোইও অঅং উববাসো (১)। ইতি পাদয়োঃ পততি। (গ)

সূত্র। অজ্জে! উট্ঠেহি, কধেহি এত্থ উববাসে কেণ কজ্জং?। (২) (ঘ)

(খ) আ দাস্যাঃ পুত্র! চূর্ণবৃদ্ধ! কদা নু খলু ত্বাং কুপিতেন রাজ্ঞা পালকেন নববধূকেশকলাপমিব সুগন্ধং ছেদ্যমানং প্রেক্ষিষ্যে।

(গ) প্রসীদতু আর্য্যঃ। আর্য্যস্যৈব পারলৌকিকঃ অয়মুপবাসঃ।

(ঘ) আর্য্যে! উত্তিষ্ঠ, কথয় অত্র উপবাসে কেন কার্য্যম্?।

(খ) সূত্রেতি। পালকেন তদাখ্যেন। দৃষ্টাচারাদাহ—নববধূকেশকলাপমিব ইতি। তথা চাহ কাতন্ত্রবৃত্তৌ দুর্গসিংহঃ—"মুণ্ডয়িতারঃ শ্রাবিষ্টায়না বধূমূঢ়াম্" ইতি। পুষ্পমাল্যেন সুরভিতৈলেন চ শোভনো গন্ধো যস্য তম্।

(গ) নটীতি। আর্য্যস্যৈব ভবত এব পারলৌকিকঃ—জন্মান্তরে অভিরূপতা-রূপ-ফলসম্পাদকঃ।

(ঘ) সূত্রেতি। কেন জনেন, কার্য্যং প্রয়োজনম্।

[খ] সূত্রধার। (ক্রোধের সহিত) আ বাঁদীর পো চূর্ণবৃদ্ধ! রাজা পালক ক্রুদ্ধ হইয়া নব বধূর কেশকলাপের ন্যায় কখন তোকে সুগন্ধ অবস্থায় কাটিয়া ফেলিবেন, তাহা আমি দেখিব?।

(গ) নটী। আপনি প্রসন্ন হউন। আপনারই পরলোকীয় ফলজনক এই উপবাস। (এই বলিয়া পায়ের উপর পড়িল।)

(ঘ) সূত্রধার। আর্য্যে! উঠ, বল—এই উপবাসে কাহাদ্বারা প্রয়োজন সিদ্ধ হইবে?।

(১) পসীদদু পসীদদু অজ্জো। ণং অজ্জস্স জ্জেব পারলোইও অঅং উববাসো অণুচিট্ঠীয়দি। (২) উট্ঠেহি উট্ঠেহি কধেহি কধেহি ইধ।

नटी। अम्हारिसजणजोग्गेण वम्हणेण उवणिमन्तिदेण। (ङ)

सूत्र। तेण हि गच्छदु अज्जा। अहं पि अम्हारिसजण-जोग्गं वम्हणं उवणिमन्तेमि। (च)

नटी। जं अज्जो आणवेदि। इति निष्क्रान्ता। (छ)

सूत्र। परिक्रम्य। हीमाणहे! ता कधं मए एव्वं सुसमिद्धाए उज्जइणीए अम्हारिसजणजोग्गो वम्हणो अस्सेसितव्वो।

(ङ) अस्मादृशजनयोग्येन ब्राह्मणेन उपनिमन्त्रितेन।

(च) तेन हि गच्छतु आर्य्या। अहमपि अस्मादृशजनयोग्यं ब्राह्मणमुपनिमन्त्रयामि।

(छ) यदार्य्य आज्ञापयति।

(ङ) नटीति। अस्मादृशजनस्य दरिद्रलोकस्य योग्येन दरिद्रतया उपयुक्तेन उपनिमन्त्रितेन भोजनार्थमाहूतेन कार्य्यमिति पूर्व्वेणान्वयः। उत्कृष्टभोजिनी धनिनी दरिद्रगृहे निकृष्टभोजनं दुःखकरमेवेति, ततः पुण्यर्व्वपरीत्येन पापमेव स्यादिति न तेन प्रयोजनमिति भावः।

(च) सूत्रेति। अस्मादृशजनयोग्यं दरिद्रमित्यर्थः। स्वगृह एव व्रतानुष्ठाने तत्र च ब्राह्मणभोजनावश्यकत्वं तत्पूर्व्वमेवात्मनो भोजनमन्याय्यम्। अभुक्ता स्थितौ च दारुणक्षुधायातना इत्यतः सत्वरतार्थं सूत्रधारस्य आत्मन एव ब्राह्मणनिमन्त्रणाग्रह इति बोध्यम्।

(ज) सूत्रेति। एवम् इत्थम्। मैत्रेयो नाम। अशितं भोक्तुम् अयणोः अय-

(ঙ) নটী। আমাদের মত লোকের পক্ষে উপযুক্ত নিমন্ত্রিত ব্রাহ্মণদ্বারা।

(চ) সূত্রধার। তাহা হইলে তুমি যাও, আমিও আমাদের মত লোকের উপযুক্ত ব্রাহ্মণ নিমন্ত্রণ করি।

(ছ) নটী। আর্য্য যাহা আদেশ করেন। (এই বলিয়া নিষ্ক্রান্ত হইল।)

বিলোক্য। এসো চারুদত্তস্স মিত্তং মিত্তেঅো ইধো জ্জেব আঅচ্ছদি ভোদু, পুচ্ছিস্সং দাব। অজ্জ মিত্তেঅ! অহ্মাণং গেহে অসিদুং অগ্গণী ভোদু অজ্জো! (জ)

নেপথ্যে। ভোঃ! অস্সং বম্হণং উবণিমন্তেদু ভবম্। বাবুদো দাণিং অহম্। (ঝ)

(জ) আশ্চর্য্যম্? তৎ কথং ময়া এবং সমৃদ্ধায়ামুজ্জয়িন্যাম্ অস্মাদৃশজনযোগ্যো ব্রাহ্মণঃ অন্বেষ্টব্যঃ। এষ চারুদত্তস্য মিত্র মৈত্রেয় ইত এব আগচ্ছতি। ভবতু, প্রক্ষ্যামি তাবত্। আর্য্য! মৈত্রেয়! অস্মাকং গেহে অশিতুমগ্রণীর্ভবতু আর্য্যঃ!।

(ঝ) ভোঃ! অন্যং ব্রাহ্মণমুপনিমন্ত্রয়তু ভবান্। ব্যাপৃত ইদানীমহম্।

---

বর্ত্তী আর্য্যো ভবান্। এতেনান্যেঽপি ব্রাহ্মণা নিমন্ত্রণীয়া ইতি সূচিতম্। শূদ্রেষু "দাসগোপালকুলমিত্রার্দ্ধসীরিণাম্। ভোজ্যান্নতা গৃহস্থস্য" ইত্যাদ্যুদ্বাহতত্ত্বধৃতব্রহ্মপুরাণীয়নিষেধস্য তদানীমপি সাধারণসামাজিকৈরপরিগৃহীতত্বাৎ সূত্রধারস্য মৈত্রেয়কুলমিত্রত্বাচ্চ উত্তমব্রাহ্মণ এব চারুদত্তমিত্রং মৈত্রেয়ঃ সূত্রধারেণ ভোক্তুং নির্ব্বাধমামন্ত্রিত ইতি বোধ্যম্।

(ঝ) নেপথ্য ইতি। নেপথ্য বেশরচনাস্থানম্। ব্যাপৃতঃ কার্য্যান্তরে বিশেষেণাসক্তঃ। অতএব ভোজনার্থং ন বিলম্বিতুমর্হামীতি ভাবঃ। মৈত্রেয়স্যোত্তরমেতৎ।

---

(জ) সূত্রধার। (পদক্ষেপ করিয়া) কি আশ্চর্য্য! তা আমি এইরূপ সুসমৃদ্ধ উজ্জয়িনীনগরে কি করিয়া, আমাদের মত লোকের উপযুক্ত ব্রাহ্মণ অন্বেষণ করিব। (দেখিয়া) এই যে চারুদত্তের মিত্র মৈত্রেয় এদিকেই আসিতেছেন। হউক, জিজ্ঞাসা করিব। আর্য্য! মৈত্রেয়! আমাদের গৃহে ভোজন করিবার নিমিত্ত আপনি অগ্রগামী হউন।

(ঝ) নেপথ্যে। মহাশয়! আপনি অন্য ব্রাহ্মণকে নিমন্ত্রণ করুন। আমি এখন কার্য্যান্তরে ব্যাপৃত রহিয়াছি।

सूत्र। अज्ज! सम्पस्सं भोअणं णीसवत्तंच। अविअ-दक्खिणा कावि दे भविस्सदि। (ञ)

पुनर्नेपथ्ये। भोः जं दाणिं पढ़मं ज्जेव पच्चादिट्ठोसि, ता को दाणिं दे णिब्बन्धो पदे पदे मं अणुबन्धेदुम्। (१) (ट)

सूत्र। पच्चादिट्ठोम्हि एदिणा। भोदु, अस्सं वम्हणं उवणिमन्तेमि। (ठ)। इति निष्क्रान्त।

(ञ) आर्य्य! सम्पन्नं भोजनं निःसपत्नञ्च। अपि च दक्षिणा कापि ते भविष्यति।

(ट) भोः! यदिदानीं प्रथममेव प्रत्यादिष्टोऽसि; तत् क इदानीं ते निर्बन्धः पदे पदे मामनुबन्धुम्।

(ञ) सर्वेति। भुज्यते यत् तत् भोजनं खाद्यमन्नव्यञ्जनादिकम्, सम्पन्नं सर्वथा निष्पन्नम्। अतो न विलम्बसम्भव इति भावः। ननु पीठपावादिसम्पादनेनापि कथञ्चिद्विलम्बो भविष्यतीत्याह निःसपत्नञ्चेति। निर्गते विद्यमाने सपत्नाः प्रतिपक्षा अपरे भोजका यस्य तत् तादृशम्। भवन्तं विना अन्य. कश्चिदपि भोजको नास्तीति तत्पीठपावादिसम्पादनेनापि न विलम्बसम्भावनेति भाव। विशेषेण प्ररोचनार्थमाह अपि च दक्षिणेत्यादि।

(ट) पुनरिति। पदे पदे प्रतिपदक्षेपम्. अनुबन्ध, भोजनाय अनुरोद्धुम्। निर्बन्ध आग्रहातिशयः। इदमपि सैव यस्य वोत्तरम्।

(ঞ) সূত্রধার। আর্য্য! খাদ্য প্রস্তুত, কোন বাধাও আর নাই, আপনার দক্ষিণাও কিছু হইবে।

(ট) পুনরায় নেপথ্যে। মহাশয়! প্রথমেই যে আপনাকে আমি প্রত্যাখ্যান করিয়াছি, তথাপি প্রত্যেক পদক্ষেপে আমাকে অনুরোধ করিবার জন্য আপনার এ কোন্ আগ্রহ!।

(१) अणुबन्धिदुम्।

# आमुखम्। (१) (ड)

प्रविश्य प्रावारकर्णौ मैत्रेयः। "अन्यं ब्राह्मणम्" इति पूर्वोक्तं पठित्वा।

**अथवा मए वि मित्तेण परस्स आमन्तणआइं भक्खिदव्**

(ठ) प्रत्यादिष्टोऽस्मि एतेन। भवतु, अन्यं ब्राह्मणमुपनिमन्त्रयामि।

---

(ठ) सूत्रेति। एतेन मैत्रेयेण। अन्यमिति। अन्यथा ममापि भोजनं न स्यात्, तथा च सति दारुणक्षुधायातनेयं दुःसहैव तिष्ठेदिति भावः।

(ड) आमुखमिति। आ सम्यक् मुखम् अभिनेयवस्तुन आद्यभाग इत्यामुखम्। तच्च प्रस्तावना। तथा च साहित्यदर्पणे—

"नटी विदूषको वापि पारिपार्श्विक एव वा।
सूत्रधारेण सहिताः संलापं यत्र कुर्वते॥
चित्रैर्वाक्यैः स्वकार्य्योत्थैः प्रस्तुताक्षेपिभिर्मिथः।
आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा॥"

इदञ्च आमुखं प्रयोगातिशयो नाम। तथा चात्र नस्या व्रतविषयकालोचनारूपे एकस्मिन् प्रयोगे प्रचरति सति "एसो चारुदत्तस्स मित्तं मित्तेओ इधो ज्जेव आअच्छदि" इत्यादिप्रयोगान्तरप्रयोगेण मैत्रेयरूपपात्रस्य प्रवेशः सञ्जात इति। यथा साहित्यदर्पणे—

"यदि प्रयोग एकस्मिन् प्रयोगोऽन्यः प्रयुज्यते।
तेन पात्रप्रवेशश्चेत् प्रयोगातिशयस्तदा॥"

लक्षणान्तरप्रसक्तिनिरासप्रकारस्तु साहित्यदर्पणटीकायामेवास्माभिः प्रदर्शित इत्यनुसन्धेयम्।

---

(ঠ) সূত্রধার। ইনি প্রত্যাখ্যান করিলেন। হউক, অন্য ব্রাহ্মণ নিমন্ত্রণ করি। (এই বলিয়া চলিয়া গেল।)

## (ড) প্রস্তাবনা।

---

(१) इत्यामुखम्।

व्वाइं (१)। हा अवत्थे! तुलेसि। जो णाम (२) अहं तत्तभवदो चारुदत्तस्स रिद्धीए अहोरत्तं पअत्तणसिद्धेहिं उग्गार-सुरहि-गन्धेहिं मोदकेहिं ज्जेव असिदो अब्भन्तरचदुस्साल-दुआरउववविट्ठो मल्लक-(३) सदपरिवुदो चित्तअरो विअ अङ्गु-

(ढ) अथवा मयापि मैत्रेयेण परस्य आमन्त्रणकानि भक्षितव्यानि। हा अवस्थे! तुलयसि। यो नामाहं तत्र भवतः चारुदत्तस्य ऋद्ध्या अहोरात्रं प्रयत्नसिद्धैः उद्गारसुरभि-गन्धैः मोदकैरेव अशितः अभ्यन्तरचतुःशालद्वारे उपविष्टः मल्लकशतपरिवृतश्चित्रकर इव

(ढ) प्रविश्येति। प्रावृणोत्यनेन पूर्वकायमिति प्रावारः, करणे घञ्। प्रावार उत्तरीयवस्त्रं हस्ते यस्य सः। "द्वौ प्रावारोत्तरासङ्गौ" इत्यमरः। "अन्यं ब्राह्मणम्" इत्यादि पूर्वोक्तस्य पुनः पाठो भोजनप्रतिबन्धं कार्य्यान्तरव्यापृतत्वापेक्षया अथवेत्यादि पश्चात्तरस्याभिधानप्रसक्त्यर्थः। मयापि धनिचारुदत्ताश्रितेनापीति तात्पर्य्यम्, परस्य चारुदत्तभिन्नस्य, आमन्त्र्यन्ते आहूयते येभ्य इत्यामन्त्रणकानि आमन्त्रणानन्तरखाद्यानि अन्नादीनि। "कृत्यल्युटोऽन्यत्रापि" इति तादर्थ्ये ल्युट्, कुत्सायाञ्च कप्रत्ययः। अवस्थे! वर्त्तमानदैन्यदशे! तूलयसि तूलं तूलकतुल्यलघुं करोषि लोकमिति शेषः, सर्व्वविधगौरव-हानिकरणादिति भावः। ऋद्ध्या सम्पदा सम्पत्तिस्थितिसमये इत्यर्थः। प्रयत्नेन आदरेण सिद्धैर्निष्पन्नैः, उद्गारेण मोदकेभ्य एव उत्थानेन सुरभिर्घ्राणतर्पणो गन्धो येषां तैः, अशितं भोजनमस्यास्तीति अशितः सन्, अर्श आदित्वादच्। अभ्यन्तरे यत्

(ঢ) উত্তরীয়হস্তে প্রবেশ করিয়া মৈত্রেয় ("অন্য ব্রাহ্মণ নিমন্ত্রণ করুন" এই পূর্ব্বোক্ত পাঠ করিয়া) অথবা আমি মৈত্রেয়ও, পরের বাড়ী ভোজন করিব। হায় অবস্থা! তুমি মনুষ্যকে তূলার ন্যায় লঘু করিয়া থাক। যে আমি, মাননীয় চারুদত্তের সমৃদ্ধির সময়ে অহোরাত্র যত্নপূর্ব্বক নিষ্পা-দিত এবং নাসিকার তৃপ্তিসাধক-সৌরভযুক্ত মোদকই ভোজন করিয়া, ভিতরের চতুঃশালার দ্বারদেশে উপবিষ্ট হইয়া, বহুতর ব্যঞ্জনের পাত্রে

(१) पच्छिदव्वाइं। (२) दाणिं। (३) मल्लक…।

**लीहिं छिविअ छिविअ अवणेमि, णअरचत्तरवुसही विअ रोम-न्थाअमाणो चिट्ठामि, सो दाणिं अहं तस्स दलिद्दाए जहिं तहिं चरिअ गेहपारावदो विअ आवामणिमित्तं इध आअ-च्छामि। (ठ)**

अङ्गुलीभिः स्पृष्ट्वा स्पृष्ट्वा अपनयामि, नगरचत्वरवृषभ इव रोमन्थायमानस्तिष्ठामि। स इदानीमहं तस्य दरिद्रतया यस्मिन् तस्मिन् चरित्वा गेहपारावत इव आवासनिमित्तमत्र आगच्छामि।

---

चतुःशालं तस्य द्वारं। मल्ल एव मल्लकः अनुकम्पाया कप्रत्ययः। मल्लका भोजनीय-द्रव्यपूर्णपात्राणि नीलपीतादिवर्णपूर्णपात्राणि च तेषां शतेन समूहेन परिवृतः परिवेष्टितः।

"मल्लः पात्रे कपोले च मनस्यभेदे बलीयसि" इति मेदिनी। चित्रकर आलेख्यनिर्म्माता। अपनयामि अपसारयामि। वर्णपात्रशतेन परिवृतश्चित्रकरो यथा अङ्गुलीभिः स्पृष्ट्वा स्पृष्ट्वा वर्णपात्रेभ्यो बहुतरवर्णानानीय वामकरतलादौ एक मिश्रितवर्णं निर्म्माय तत्पात्राण्यपसारयति, तद्वत् अहमपि मोदकानि भुक्त्वा अन्नभोजन-समये व्यञ्जनादिपात्रशतेन परिवृतः सन् तेषामादरप्रदर्शनार्थं तत्पात्राणि अङ्गुलीभिः स्पृष्ट्वा स्पृष्ट्वा बुभुक्षाया अभावादपसारयामीति सरलार्थः। नगरस्य यत् चत्वरमङ्गनं तस्य वृषभो वृषः स इव। उद्गीर्य्य भुक्तद्रव्यस्य पुनश्चर्वणं रोमन्थः। "रोमन्थः स्यात् पशूद्गारो रोमन्थः कीटवर्त्तनम्" इत्यनेकार्थध्वनिमञ्जरी। रोमन्थायमानः उद्गीर्य्य पुनश्चर्वणेन ताम्बुलादिचर्वणेन च हनुदेशं चालयन्नित्यर्थः। तस्य चारुदत्तस्य। गेह-पारावत इव गृहपालितकपोत इव। आवासनिमित्तम् अवस्थितिनिमित्तम्।

---

পরিবেষ্টিত হইয়া, চিত্রকরের ন্যায় অঙ্গুলিদ্বারা স্পর্শ করিয়া করিয়া সরাইয়া রাখিয়াছি এবং নগরাঙ্গনস্থিত বৃষের ন্যায় হনুচালন করিয়া অব-স্থান করিযাছি, সেই আমি এখন, চারুদত্তের দরিদ্রতানিবন্ধন, গৃহ-কপোতের ন্যায় যেখানে সেখানে বেড়াইয়া, বাস করিবার জন্য এখানে আসিয়া থাকি।

एसो अ अज्जचारुदत्तस्स पिअवअस्सेण चुस्सवुड्ढेण (१) जादीकुसुमवासिदो पावारओ अणुप्पेसिदो सिद्धीकिददेवकज्जस्स अज्जचारुदत्तस्स उवणेदव्वो त्ति। ता जाव अज्जचारुदत्तं पेक्खामि। परिक्रम्य अवलोक्य च। एसो चारुदत्तो सिद्धीकिददेवकज्जो गिहदेवताणं बलिं हरन्तो (२) इदो ज्जेव आअच्छदि। (ग)

(ग) एष च आर्य्यचारुदत्तस्य प्रियवयस्येन चूर्णवृद्धेन जातीकुसुमवासितः प्रावारकः अनुप्रेषितः, सिद्धीकृतदेवकार्य्यस्य आर्य्यचारुदत्तस्य उपनेतव्य इति। तद्यावदार्य्यचारुदत्तं प्रेक्षे। एष चारुदत्तः सिद्धीकृतदेवकार्य्यो गृहदेवतानां बलिं हरन् इत एवागच्छति।

(ग) एष इति। जातीकुसुमेन वासितः स घर्षणादिना सुरभीकृतः। सिद्धीकृतं निष्पादितं देवकार्य्यं देवपूजा येन तस्य। उपनेतव्यो दातव्यः, इति आदिश्य अनुप्रेषितः इत्यन्वयः। प्रेक्षे पश्यामि। "नार्थितं विशन् पावम्" इति भरतोक्त्याचारुदत्तप्रवेशसूचनायाह पुनरेष इति। बलिं पूजोपहारम्, हरन् ददत्। "बलिः पूजोपहारे स्यात्" इत्यमरः।

विदूषकस्येयं प्राच्या भाषा—"प्राच्या विदूषकादीनाम्" इति साहित्यदर्पणात्।

(গ) মাননীয় চারুদত্তের প্রিয়সখা চূর্ণবৃদ্ধ, জাতীকুসুমবাসিত এই উত্তরীয় বসনখানি পাঠাইয়া দিয়াছেন এবং বলিয়াছেন যে, "আর্য্য চারুদত্ত দেবকার্য্যসম্পাদন করিয়া সুস্থ হইলে ইহা তাঁহার নিকট উপস্থিত করিবে।" অতএব আর্য্যচারুদত্তের সহিত সাক্ষাৎ করি। (কতিপয়-পদক্ষেপপূর্ব্বক দর্শন করিয়া) এই যে চারুদত্ত, দেবকার্য্য সম্পাদন করিয়া, গৃহদেবতাদিগকে উপহার দিতে দিতে এই দিকেই আসিতেছেন।

(१) चुर्णवुड्ढेण। (२) कोरेन्तो।

संवा। पेक्खध पेक्खध भट्टालका!। हा संपदं ज्जेव एक्काह अद्धे गण्डे कड़े, अवलाह अद्धे मुक्के ; तह वि मं अवलं संपदं ज्जेव मग्गदि। (छ)

माथुरः। गृहीत्वा। धुत्तु! माथुरु अहं णिउण्। एत्थ तुए ण अहं (१) धुत्तिज्जामि। ता पअच्छ तं लुत्तदण्डआ! सव्वं सुवस्सं संपदं। (ज)

(छ) प्रेक्षध्वं प्रेक्षध्वं भट्टारकाः!। हा। साम्प्रतमेव एकस्य अर्द्धं गण्डं कृतम्, अपरस्य अर्द्धं मुक्तम ; तथापि मामबलं साम्प्रतमेव मार्गयति।

(ज) धूर्त्त! माथुरोऽहं निपुणः। अत्र त्वया नाहं धूर्त्तयामि, तत् प्रयच्छ तं लुप्तदण्डक। सर्वं सुवर्णं साम्प्रतम्।

(छ) संवाहक इति। भट्टारकाः। राजानः। मध्यस्थतया राजवन्माननीया इत्यर्थः। एकस्य सभिकस्य। गण्ड वाचा नियमः। अपरस्य द्यूतकरस्य। मुक्तं तेनैव द्यूतकरेण परित्यक्तम् अबलं धनबलहीनं दशसुवर्णं दातुमसमर्थमित्यर्थः, मार्गयति अन्विष्यति तत् दशसुवर्णं प्रार्थयति इति तात्पर्य्यम्।

(ज) माथुर इति। गृहीत्वा संवाहकं धृत्वा। निपुणः पराभिप्रायज्ञाने पटुः। त्वया सार्द्धम्। धूर्त्त धूर्त्तकार्य्यं करोमीति धूर्त्तयामि। लुप्तदण्डक इति पूर्व्ववदेवार्थः।

(চ) মাথুর। সেই দশখানি মোহর দে, যাচ্ছিস্ কোথায়?।

(ছ) সংবাহক। দেখুন দেখুন মহাশয়রা! হায়! এখনই এক-জনের অর্দ্ধে ওয়াধা করিয়াছি, অপরের অর্দ্ধ ছাড়িয়া দিয়াছে। তথাপি আমাকে দুর্ব্বল পাইয়া এখনই আবার চাহিতেছে!।

(জ) মাথুর। (ধরিয়া) ধূর্ত্ত! আমি চতুর মাথুর। এ বিষয়ে

(१) एत्थ ण अहं।

संवा । कुदो दइस्सं ?। (झ)

माथुरः । पिदरं विक्किणिअ पअच्छ । (ञ)

संवा । कुदो मे पिदा ?। (ट)

माथुरः । मादरं विक्किणिअ पअच्छ । (ठ)

संवा । कुदो मे मादा ?। (ड)

माथुरः । अप्पाणं विक्किणिअ पअच्छ । (ढ)

संवा । करेध पसादं, णेध मं लाजमग्गं । (ण)

माथुरः । पसर । (त)

(झ) कुतो दास्यामि ?। (ञ) पितरं विक्रीय प्रयच्छ । (ट) कुतो मे पिता ?

(ठ) मातरं विक्रीय प्रयच्छ । (ड) कुतो मे माता ?। (ढ) आत्मानं विक्रीय प्रयच्छ ।

(ण) कुरुत प्रसादम् । नयत मा राजमार्गम् । (त) प्रसर ।

(त) माथुर इति । प्रसर राजमार्गे गच्छ ।

আমি তো'র সঙ্গে ধূর্ত্তের কার্য্য করিব না। এবে পণলোপকারী। সেই সমস্ত সুবর্ণ এখনই দে।

(ঝ) সংবাহক। কোথা হইতে দিব ?।

(ঞ) মাথুর। পিতাকে বিক্রয় করিয়া দে।

(ট) সংবাহক। আমার পিতা কোথায় ?।

(ঠ) মাথুর। মাতাকে বিক্রয় করিয়া দে।

(ড) সংবাহক। আমার মাতা কোথায় ?।

(ঢ) মাথুর। আপনাকে বিক্রয় করিয়া দে।

(ণ) সংবাহক। অনুগ্রহ কর, আমাকে রাজপথে নাও।

(ত) মাথুর। চল।

संवा। एव्वं भोदु। परिक्रामति। अज्जा! क्किणिध मं इमस्स सहिअस्स हत्थादो दसेहिं सुवस्सेहिं। इत्या काशे। किं भणाध? "किं कलइस्ससि" त्ति गेहे दे कम्मकले हुविस्सं। कधं अदइअ पड़िवअणं गदे। भोदु, एव्वं इमं अस्सं भणाइस्सं। पुनस्तदेव पठति। कधं एसे वि मं अवधीलिअ गदे। हा! अज्जचालुदत्तस्स विहवे विहड़िदे एसे वट्टामि मंदभाए। (थ)

(थ) एवं भवतु। आर्य्याः! क्रीणीध्व माम् अस्य सभिकस्य हस्तात् दशभिः सुवर्णैः। किं भणत? 'किं करिष्यसि?' इति। गेहे ते कर्म्मकरो भविष्यामि। कथमदत्त्वा प्रतिवचनं गतः?। भवत्वेवम्, इममन्यं भणिष्यामि। कथमेषोऽपि मामवधीर्य्य गतः?। हा। आर्य्यचारुदत्तस्य विभवे विघटिते एषोऽहं वर्त्ते मन्दभाग्यः।

(थ) सवाहक इति। आकाशभाषितलक्षणं यथा साहित्यदर्पणे—

"किं ब्रवीषीति यन्नाट्ये विना पात्रं प्रयुज्यते।
श्रुत्वेवानुक्तमप्यर्थं तत् स्यादाकाशभाषितम्॥"

कर्म्मकर उच्छिष्टलेपनभाण्डमार्ज्जनादिकार्य्यकारी भृत्यः। अवधीर्य्य अवज्ञाय। विभवे धनसम्पत्तौ, विघटिते विनष्टे, एषोऽहं मन्दभाग्यो वर्त्ते सञ्जातः।

(থ) সংবাহক। এইরূপই হউক। (পাদচারণ করিতে লাগিল) মহাশয়গণ! দশখানি মোহর দিয়া আমাকে এই সভাধ্যক্ষের হাত হইতে কিনুন। (দেখিয়া শূন্যে) কি বলিলেন—"তুমি কি করিতে পার" ইহা?। আমি আপনার ঘরে কার্য্যকারক (ভৃত্য) হইব। হায়! উত্তর না দিয়াই গেল। হউক, এইরূপ করি, এই অন্য লোককে বলি। (পুনরায় তাহাই বলিল) হায়! এ ব্যক্তিও, আমাকে অবজ্ঞা করিয়া গেল। হায়! আর্য্য চারুদত্তের সম্পত্তি নষ্ট হইলে পরই আমি এইরূপ দুর্ভাগ্য হইয়া পড়িয়াছি।

माथुरः। णं देहि। (द)

संवा। कुदो दइस्सं ?। इति पतति। (ध)

माथुरः। कर्षति। (न)

संवा। अज्जा ! पलित्ताअध, पलित्ताअध। (प)

ततः प्रविशति दर्दुरकः। (फ)

दर्दु। भोः ! द्यूतं हि नाम पुरुषस्य असिंहासनं राज्यम्। (ब)

(द) ननु देहि। (ध) कुतो दास्यामि ?। (प) आर्याः। परित्रायध्वं परित्रायध्वम्।

(ध) संवाहक इति। पतति पादयोरिति शेषः।

(न) माथुर इति। कर्षति तत्सुवर्णग्रहणार्थमाकर्षति।

(फ) तत इति। दर्दुरो भेकस्तद्वदेव द्यूतक्रीडाकाले प्लवनात् दर्दुरक इति नाम, सञ्ज्ञायाञ्च कप्रत्ययः। अनीचत्वात् शिक्षितत्वाच्चायं संस्कृतं पठति।

(ब) दर्दुरक इति। हि निश्चितम्। न विद्यते सिंहासनं यस्मिन् तत्, राज्यं राज्यस्वरूपम्। तद्वदेव महामोदकरणादिति भावः। नाम इत्यहं सम्भावयामीत्यर्थः। अत्राधिकारूढवैशिष्ट्य रूपकम्।

---

(द) माথুর। ওরে! দে।

(ধ) সংবাহক। কোথা হইতে দিব ?। ( এই বলিয়া পায়ের উপর পড়িল )

(ন) মাথুর। ( টানিতে লাগিল )

(প) সংবাহক। মহাশয়েরা! আমাকে রক্ষা করুন, আমাকে রক্ষা করুন।

(ফ) তদনন্তর দর্দুরকের প্রবেশ।

न गणयति पराभवं कुतश्चित्
हरति ददाति च नित्यमर्थजातम्।
नृपतिरिव निकाममायदर्शी
विभववता समुपास्यते जनेन ॥७॥

तदामोदजनकत्वमेव समर्थयति नेति। पूर्वगद्यस्थ द्यूतमिति पदमत्रान्वेतीत्यवधेयम्। तथा च द्यूतं कर्त्तृ, कुतश्चित् पणेन धनहारणादिकारणात् पराभवं पराजयम्, न गणयति प्राप्तमपि धनबाहुल्यात् न मन्यते; अन्यत्र तु कुतश्चिदपि अन्यस्मात् पुरुषात्, पराभवं न गणयति आत्मनः प्रभावातिशयात् नानुभवति। तथा द्यूतम्, नित्यं सर्वदा, अर्थजातं पणभूतधनसमूहम्, हरति जित्वा विजितजनादानयति, ददाति च स्वयं विजितं सत् जेतृजनाय अर्पयति च। अन्यत्र तु नित्यम्, अर्थजातं धनसमूहम्, हरति प्रजाभ्यः कररूपेण गृह्णाति; ददाति च सत्पात्रादिभ्यो वितरति च। अतएव विभववता धनिना जनेन, आयं जयेन धनागमं दर्शयतीति आयदर्शि द्यूतम्, आयं पश्यति स्वयमेव पर्य्यवेक्षते इति आयदर्शी नृपतिरिव, निकामं यथेष्टं यथा स्यात्तथा, समुपास्यते आश्रीयते सेव्यते च।

अत्र "गणयति, हरति, ददाति" इत्यनेकक्रियाणामेककर्त्तृकारकत्वात् दीपक पूर्णोपमा च; अनयोर्गुणप्रधानभावेनाङ्गाङ्गिभावात् सङ्करः।

"आयदर्शी" इति द्यूतपक्षे क्लीवलिङ्गत्वात् ह्रस्व इकारः स्वीकार्य्यः।

पुष्पिताग्रा वृत्तम् ॥७॥

---

(ব) দর্দুরক। ওহে! পাশাটা লোকের পক্ষে সিংহাসনবিহীন রাজত্ব।

কোন কারণবশতঃ পরাজয়কে গ্রাহ্য করে না; সর্ব্বদা ধনসমূহ হরণও করে, দানও করে এবং সম্পত্তিশালী লোক, রাজার ন্যায় আয়দর্শী পাশাকে যথেষ্ট সেবা করে ॥৭॥

अपि च। द्रव्यं लब्धं द्यूतेनैव दारा मित्रं द्यूतेनैव।
दत्तं भुक्तं द्यूतेनैव सर्वं नष्टं द्यूतेनैव ॥८॥

अपि च। त्रेता हृतसर्वस्वः पावर-पतनाच्च शोषितशरीरः।
नर्दित-दर्शितमार्गः कटेन विनिपातितो यामि ॥९॥

द्रव्यमिति। द्यूतेनैव द्रव्यं धनं लब्धमर्ज़ितमिति शेषः। द्यूतेनैव दाराः कलत्रं मित्रं सुहृच्च लब्धमिति पूर्वेणैवान्वयः, धनलाभेन धनीभूय परिणयकरणात् तज्जन प्राप्तिलोभेनैव लोकानां सुहृत्त्वप्राप्तेश्चेति भावः। द्यूतेनैव दत्तं दानं कृतम्, भुक्तं भोगश्च कृतः, प्रचुरतरधनलाभादित्याशयः। तथा पुनर्द्यूतेनैव, सर्वं पैतृकसम्पत्त्यादिकमपि नष्टम्, हारितत्वादित्यभिप्रायः।

अत्र आयव्ययरूपयोर्विरुद्धयोर्लाभनाशयोरेकत्र सङ्घटनाद्विषमालङ्कारः। किन्तु "द्यूतेनैव" इति ह्रस्वस्यापि पादान्तस्थत्वेन गुरुत्वाङ्गीकारान्न हतवृत्ततादोषः। न च "यत्पादान्ते लघोरपि गुरुभाव उक्तः, तत् सर्वत्र द्वितीयचतुर्थपादविषयम्। प्रथमतृतीयपादविषयन्तु वसन्ततिलकादेरेव" इति साहित्यदर्पणोक्तेः तत्र च आदिपदेन इन्द्रवज्रोपेन्द्रवज्रयोरेव ग्रहणात् अस्य च प्रथमतृतीयपादान्तस्थत्वात् हतवृत्ततादोष एवेति वाच्यम्, तादृशदर्पणोक्तेः प्रमाणाभावात् "विज्ञेयमक्षरं गुरु पादान्तस्थं विकल्पेन" इति सामान्याभिधानात्। एतच्च साहित्यदर्पणटीकायां हतवृत्तताप्रकरणे बहुधा समालोचितमस्माभिः। न वा "द्यूतेनैव" इत्यस्य वारंवारमभिधानात् अनवीकृतत्वदोष इत्यपि वाच्यम्, ईदृशविषये एकशब्दप्रयोगस्यैव चमत्कारजनकत्वात् शब्दान्तरप्रयोगस्य तु तदभावादिति सुधीभिर्विभावनीयम्।

विद्युन्माला वृत्तम्—"मो मो गो गो विद्युन्माला" इति लक्षणात् ॥८॥

त्रेतेति। त्रेता "त्रि" इति यस्याः प्रसिद्धिः तया तत्पतनेनेत्यर्थः हृतं सर्वस्वं यस्य

---

আরও, আমি দ্যূতদ্বারাই ধন লাভ করিয়াছিলাম; দ্যূতদ্বারাই ভার্য্যা ও মিত্র পাইয়াছিলাম, দ্যূতদ্বারাই দান ও ভোগ করিয়াছিলাম এবং দ্যূত দ্বারাই আবার সমস্ত নষ্ট করিয়াছি ॥৮॥

अग्रतोऽवलोक्य। अयमस्माकं पूर्वसभिको माथुर इत एवाभिवर्त्तते। भवतु, अपक्रमितुं न शक्यते। तदवगुण्ठयाम्यात्मानम्। बहुविधं नाट्यं कृत्वा स्थित:। उत्तरीयं निरीक्ष्य। (भ)

अयं पट: सूत्रदरिद्रतां गतो ह्ययं पटश्छिद्रशतैरलङ्कृत:।
अयं पट: प्रावरितुं न शक्यते ह्ययं पट: संवृत एव शोभते ॥१०॥

स: ; पावर: "पौया" इति यस्य प्रसिद्धिस्तस्य पतनाच्च शोषित दामत्वपणस्यापि हरणात् दुश्चिन्तया शुष्कीकृतं शरीरं यस्य स:। नर्त्तितेन विजेतृगणनृत्येन दर्शितो मार्ग: अपसरणपथो यस्मै स: ; तथा कठिन एतद्धनम् इयत्कालमध्ये दास्यामि इति शपथेन तद्दानासम्भवात् शपथभङ्गजनितपापेनेत्यर्थ:, विनिपातित: परलोकादपि प्रच्यावित: सन् यामि विजला दयया मुक्तत्वात् गच्छामि।

"शपथं च क्रियाकारं किलिञ्जशवयो: कट:" इति त्रिकाण्डशेष:।

अत्र दारणकार्य्यस्य बहुतरकारणोपन्यासात् समुच्चयोऽलङ्कार:।

इद द्यूतन्तु इदानीं "तुफानखेला" "फरखेला" इत्यादिनाम्ना प्रचलतीति प्रतीयते।

आर्य्या जाति: ॥९॥

(भ) अग्रत इति। पूर्वसभिक: पूर्वसभाध्यक्ष:। अपक्रमितुं पलायितुम्, न शक्यते, सन्निहितत्वादिति भाव:। अवगुण्ठयामि उत्तरीयवस्त्रे नावृणोमि।

---

আরও, 'ত্রি' পড়ায় আমার সর্ব্বস্ব হরণ করিয়াছে, 'পোয়া' পড়ায় শরীর শুকাইয়া দিয়াছে, বিজেতাদিগের আনন্দনৃত্য, আমাকে অপসরণের পথ দেখাইয়া দিয়াছে এবং প্রতিজ্ঞাভঙ্গ, আমাকে অধঃপাতিত করিয়াছে, আমি এই অবস্থায় চলিযাছি ॥৯॥

(ভ) ( সম্মুখে দৃষ্টিপাত করিয়া ) এই আমাদের পূর্ব্ববর্ত্তী সভাধ্যক্ষ মাথুর, এই দিকেই আসিতেছে। হউক, পলাইতে পারিব না। অতএব উত্তরীয় বসনদ্বারা আপনাকে আবৃত করি। ( নানারূপ অভিনয় করিয়া অবস্থান করিল। পরে উত্তরীয় বসন দেখিয়া )

अथवा किमयं तपस्वी करिष्यति (म) । यो हि—
पादेनैकेन गगने द्वितीयेन च भूतले ।
तिष्ठाम्युल्लम्बितस्तावद्यावत्तिष्ठति भास्करः ॥११॥

अयमिति । अयं पट उत्तरीयवस्त्रम्, सूत्रदरिद्रता तन्तुहीनता गतः प्राप्तः, अत्यन्त-पुरातनत्वेन सूत्राणां स्खलनादिति भावः । अयं पटः, छिद्रशतैरलङ्कृतः, अतीवजीर्ण-त्वादित्याशयः । अयं पटः, प्रावरितुं देहमाच्छादयितुं न शक्यते, न शक्नोति बृहद्बृह-च्छिद्रपूर्णत्वेन प्रायेणाङ्गानां प्रकाशसम्भवादित्यभिप्रायः । अतएव अयं पटः, संवृत एव सङ्कुचितः स्थित एव शोभते ।

अस्य वक्तुर्दरिद्रकस्य कदाचित् प्रकारवत्तुच्छभाषित्वात् ईदृशपाठस्य तत्समदभावेन सम्भवाच्च "अयं पटः" इत्यस्य वारंवारमभिधानेऽपि न अनवीकृतत्वदोषः, न वा हि शब्दद्वयस्य वृत्तिपूरणमात्रार्थत्वेऽपि निरर्थकत्वदोषश्चेति दिक् ।

शक्यत इति दैवादिकस्य उभयपदिनः शकधातोः प्रयोगः ।

वंशस्थविलं वृत्तम् ॥१०॥

(म) उक्तरूपेण पटेन देहमावृत्य प्रच्छन्नभावेनावस्थानमसम्भावयन्नाह अथवेति । अवगुण्ठनाभावेऽपीत्यर्थः । तपस्वी क्षुद्रः, अयं माथुरः किं करिष्यति परिचयं प्राप्यापि ममेति शेषः, न किमपीत्यर्थः । यः अहम् ।

पादेनेति । एकेन पादेन गगने, द्वितीयेन च पादेन भूतले, उल्लम्बित ऊर्द्धलम्बित-देहः सन्, तावत् तिष्ठामि स्थातुं शक्नोमि ; भास्करः सूर्यो यावत्तिष्ठति । तथा च अयं माथुर आगत्य तद्धारितपणं प्रार्थयन्नप्राप्य यदि एकं चरणमाकाशे अपरञ्च भूतले यावत् सम्भवं प्रसार्य्य स्थातुमादिशेत्, तथापि तथैव भावेन सूर्य्यास्तमयपर्य्यन्तमेव

এই বস্ত্র—সূত্রবিহীন, এই বস্ত্র—শত ছিদ্রে শোভিত, সুতরাং এই বস্ত্র, দেহ আবরণ করিতে সমর্থ হইবে না, অতএব এই বস্ত্র, সঙ্কুচিত ( গুটান, ঘোচান ) থাকিলেই শোভা পাইবে ॥১০॥

(ম) অথবা, এই ক্ষুদ্র বেটা আমার কি করিবে ?।

माथुरः। देहि देहि (१)। (य)

संवा। कुदो दइश्शं। (र)

माथुरः। कर्षति।

दर्दु। अये! किमेतदग्रतः। आकाशे। किं भवानाह? "अयं द्यूतकरः सभिकेन खलीक्रियते, न कश्चिन्मोचयति" इति?। नन्वयं दर्दुरो मोचयति। उपसृत्य। अन्तरमन्तरम्। दृष्ट्वा। अये! कथं माथुरो धूर्त्तः, अयमपि तपस्वी संवाहकः। (ल)

(य) देहि देहि। (र) कुतो दास्यामि?।

स्थातुमहं शक्नोमि; ततोऽधिकञ्चाय न किमपि कर्त्तुं शक्नुयादिति मम परिचय-प्रस्तावेऽपि किं भयमिति भावार्थः सरलार्थश्च ॥११॥

(ल) दर्दुरक इति। अये इति दर्शकविशेषसम्बोधनम्। अग्रतः सम्मुखे, एतत् जनसम्मर्द्दघटनम्, किं कथं जातमिति शेषः। खलीक्रियते हारितपणग्रहणार्थम् आक्रोशेनाधमः क्रियते आयत्तीक्रियते इत्यर्थः। मोचयति न पणं दत्त्वा उद्धारयति। अन्तरम् अभ्यन्तरप्रवेशाय अवकाशः, दीयतामिति शेषः। वीप्सायां द्विरुक्तिः। एतेन महान् जनसम्मर्द्दः प्रतीयते। तपस्वी दीनः।

যে আমি—এক পা আকাশে দিয়া, আর এক পা ভূতলে রাখিয়া, যে পর্য্যন্ত সূর্য্য থাকিবে, সেই পর্য্যন্তই ঝুলিয়া থাকিতে পারি ॥১১॥

(য) মাথুর। দে, দে।

(র) সংবাহক। কোথা হইতে দিব।

মাথুর। (ধরিয়া টানিতে লাগিল)

(ল) দর্দ্দুরক। ওহে! সম্মুখে এ ব্যাপারটা কি?। (শূন্যে)

(१) दापय दापय।

यः स्तब्धं दिवसान्तमानतशिरा नास्ते समुल्लम्बितो
यस्योद्घर्षणलोष्टकैरपि सदा पृष्ठे न जातः किणः ।
यस्यैतच्च (१) न कुक्कुरैरहरहर्जङ्घान्तरं चर्व्यते
तस्यात्यायतकोमलस्य सततं द्यूतप्रसङ्गेन किम् ॥१२॥

"खल भस्थानकर्णेषु क्रूरं नीचेऽधमे खल." इति विश्वः ।

य इति । यो जनः समुल्लम्बित एकं चरणमाकाशे अपरञ्च भूतले यावत्सम्भवं प्रसार्य्य ऊर्द्धात् लम्बितदेहः, अतएव आनतशिराः अवनतमस्तकः सन्, दिवसान्तं दिवावसानपर्य्यन्तम्, स्तब्धं निश्चलं यथा स्यात्तथा, न आस्ते न अवतिष्ठते अहमिव अवस्थातुं न शक्नोतीत्यर्थः । उद्घृष्यते दृढसञ्चारतया विदार्य्यते यैरिति उद्घर्षणानि यानि लोष्टकानि वेदनाकरत्वेन कुत्सितानि सतपाषाणखण्डानि तैरपि पणप्रदानार्थं ताड़नैरपीत्यर्थः, यस्य जनस्य पृष्ठे, सदा किणश्चिह्नम्, न जातः समभवदिति भावः । यस्य च जनस्य, ममेवेत्याशयः, दृश्यमानम्, जङ्घाया अन्तरं मध्यभागः, अहरहः प्रत्यहम्, कुक्कुरैः सभिकप्रेरितैरित्यर्थः, न चर्व्यते, उक्तरूपसमुल्लम्बितभावेनावस्थानकाले इति भावः । सततम् अत्यायतः अतीवदीर्घदेहः दीर्घदेहत्वादेव उक्तभावेनावस्थातुमशक्त इत्यर्थः । कोमलो मृदुलदेहः कोमलदेहत्वादेव उक्तविधकष्टासहिष्णुरित्यर्थः तस्य, तस्य जनस्य द्यूतप्रसङ्गेन अक्षक्रीडाव्यापारेण, किं प्रयोजनम्, अपि तु किमपि नेत्यर्थः; तस्य विडम्बनामात्रमेव द्यूतमिति ईदृशकष्टासहिष्णोः संवाहकस्यापि द्यूतं विडम्बनैवेति भावः ।

---

আপনি কি বলিলেন ? "সভাধ্যক্ষ এই দ্যূতকরকে আবদ্ধ করিতেছে, কিন্তু কেহই উহাকে মুক্ত করিতেছে না" এই কথা বলিলেন ? । ওহে ! এই দর্দুরক মুক্ত করিতেছে । ( নিকটে যাইয়া ) একটু অবকাশ দিন, একটু অবকাশ দিন, ( দেখিয়া ) ও ! ধূর্ত্ত মাথুর, এও সেই ক্ষুদ্র সংবাহক ।

যে লোক, দিবসের শেষ পর্য্যন্ত অবনতমস্তকে ঝুলিয়া নিশ্চলভাবে

---

(१) तस्यैतच्च ।

भवतु, माथुरं तावत् सान्त्वयामि । उपगम्य । माथुर ! अभिवादये ।

माथुरः । प्रत्यभिवादयति ।

दर्दु । किमेतत् ? ।

माथुरः । अअं दशसुवस्सं धालेदि । (व)

दर्दु । ननु कल्यवर्त्तमेतत् । (श)

(व) अयं दशसुवर्णं धारयति ।

अत्र अप्रस्तुतजनसामान्याभिधानात् प्रस्तुतस्य बाहुकरूपजनविशेषप्रतीतेरप्रस्तुतप्रशंसालङ्कारः । तेन च स बाहुकापेक्षया आत्मनो दर्दुरकस्य तादृशकष्टसहिष्णुताप्रत्यायनात् व्यतिरेकालङ्कारो व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः ।

"लोष्ट्राणि लेष्टवः पुंसि" "कौलेयकः सारमेयः कुक्कुरो मृगदंशकः" इति च अमरः । लोष्टकैरिति कुत्सायां कप्रत्ययः ।

शार्दूलविक्रीडितं वृत्तम् ॥१२॥

(श) दर्दुरक इति । एतत् दशसुवर्णम्, कल्ये प्रत्युषि वर्त्तते इति कल्यवर्त्तम्

---

থাকিতে পারে না, যাহার পৃষ্ঠে সর্ব্বদা তীক্ষ্ণাগ্র লোষ্ট্র নিক্ষেপ করায়ও চিহ্ন জন্মে নাই এবং কুক্কুরে যাহার এই উরুদেশকে প্রত্যহ চর্ব্বণ করে না, সর্ব্বদা অত্যন্ত দীর্ঘ ও কোমলদেহ সেই লোকের পাশাখেলায় প্রয়োজন কি ? ॥১২॥

হউক, মাথুরকে শান্ত করি। ( নিকটে যাইয়া ) মাথুর ! নমস্কার করি।

মাথুর। ( প্রতিনমস্কার করিল )

দর্দুরক। এ ব্যাপারটা কি ?

(ব) মাথুর। এই লোকটা দশখানা মোহর ধারে।

माथुरः। दर्दुरस्य कक्षतल-लुण्ठीकृतं पटमाकृष्य। भट्टा! पश्चत पश्चत—जज्जरपडप्पावुदो अअं पुलिसो दशसुवस्सं कल्लवत्तं भणादि। (ष)

दर्दुः। अरे मूर्ख! नन्वहं दशसुवर्णान् कटकरणेन प्रयच्छामि। तत् किं यस्यास्ति धनम्, स क्रोड़े (१) कृत्वा दर्शयति?। अरे!—(स)

(ष) भर्त्तारः। पश्यत पश्यत, जर्जरपटप्रावृतोऽयं पुरुषो दशसुवर्णं कल्यवर्त्तं भणति।

आगामिप्रत्यूषकालपर्य्यन्तस्थायि परन्तु स्वल्पेन चायि नितान्तक्षणस्थायीत्यर्थः। अत एतदर्थं विशेषयत्नो न कर्त्तव्य इति भावः।

(ष) माथुर इति। कक्षतले लुण्ठीकृत सङ्कुचितभावेन स्थितम्। भर्त्तारः। महाशयाः इत्यर्थः। जर्जरेण नितान्तजीर्णेन पटेन उत्तरीयवस्त्रेण प्रावृतः आवृताङ्गः। पुरुषो दर्दुरकः। कल्यवर्त्तं कल्यवर्त्तत्वेन क्षणस्थायित्वेन तुच्छमित्यर्थः। तथा च धनवानेव अल्पधनं तुच्छतया वक्तुमर्हति, न तु दरिद्रः। एवञ्चायं दर्दुर ईदृशो दरिद्रो यत् जर्जरपटमात्रं विना नूतनमुत्तरीयमपि कर्त्तुं नार्हति; सुतरामस्य दशसुवर्णस्य तुच्छतया मननमतीवहास्यकरमिति भावः।

(स) दर्दु इति। कटस्य प्रपथस्य समयान्तरे दानाङ्गीकारस्य करणेन। जर्जरेत्यादिना प्रवर्त्तितं दारिद्र्याक्षेप निरसितुमाह तत किमिति। तथा च अस्मद्गृहे धनमस्त्येव, किन्तु स्वभावादेव ईदृशजर्ज्जरपटं व्यवहरामीति भावः।

[श] দর্দুবক। ওহে। ইহা ত ক্ষণস্থায়ী ( তুচ্ছ পদার্থ )।

[ষ] মাথুব। ( দর্দুবকেব কক্ষতলে পুঁটলিকরা কাপড়খানি টানিয়া বাহির করিয়া ) মহাশয়েরা। দেখুন দেখুন—এই লোকটা জীর্ণ কাপড়ে আবৃত অথচ দশখানা মোহরকে ক্ষণস্থায়ী [ তুচ্ছ পদার্থ ] বলে।

(१) स किं क्रीड़ ।

दुर्वर्णोऽसि विनष्टोऽसि दशस्वर्णस्य कारणात्।
पञ्चेन्द्रियसमायुक्तो नरो व्यापाद्यते त्वया ॥१३॥

माथुरः। भट्टा! तुए दशसुवस्स कल्लवत्त, मए एसु विहवु। (ह)

(ह) भर्त्तः! तव दशसुवर्णं कल्यवर्त्त, मम एष विभव.।

---

दुर्वर्ण इति। अरे माथुर! त्व दुर्वर्णोऽसि नीचजातीयोऽसि, तथा विनष्टोऽसि परलोकादिभ्रष्टोऽसि। कुत इत्याह—येन त्वया, दशाना स्वर्णाना समाहार इति तस्य दशसुवर्णस्येत्यर्थ, कारणात् पञ्चभिरिन्द्रियै: कर्ण-त्वक्-चक्षु-रसना-नासिकाभि: समायुक्त: पूर्णसर्वाङ्ग इत्यर्थ., नरो मनुष्य., व्यापाद्यते हन्यते। येन तुच्छधननिमित्त महाप्राणी मानुषो हन्तु शक्यते स खलु दुर्वर्णो विनष्टश्चेति भाव:।

अत्र दुर्वर्णता विनाशञ्च प्रति परवाक्यार्थस्य कारणत्वात् काव्यलिङ्गमलङ्कार: ॥१३॥

(ह) माथुर इति। भर्त्त:! धनस्वामिन्!। कल्यवर्त्त पूर्ववत् व्याख्यानात् क्षणस्थायि क्षणस्थायित्वेन तुच्छमित्यर्थ:। किन्तु मम एष विभवो धन धनत्वेन नितरा-मादरणीयमिति तात्पर्य्यम्। अतो नाहं तुच्छत्वेनेद परित्यक्तुमर्हामीति भाव:। गीलुस्तरौक्तिरियम्। एष इति प्रक्रम्यमानविभवविशेषणत्वात् पुलिङ्ग:।

"अर्थ-रै-विभवा अपि" इत्यमर:।

---

[স] দর্দুরক। ওরে মূর্খ! দশখানা মোহর আমি ওযাধা করিয়া দিব। তা' যার ধন আছে, সে কি তাহা কোলে করিয়া দেখায়?। ওরে!

তুমি নীচজাতি এবং পরলোকচ্যুত হইয়াছ, যে তুমি দশখানা মোহরের জন্য, পঞ্চেন্দ্রিয়যুক্ত [ আস্তো নিস্তো ] একটা মানুষকে মারিয়া ফেলিতেছ ॥১৩॥

[হ] মাথুর। মহাশয়! তোমার নিকট দশখানা মোহর ক্ষণস্থায়ী তুচ্ছ; কিন্তু আমার ইহা সম্পত্তি।

दर्दु। यद्येवम्, श्रूयतां तर्हि; अन्यान् तावत् दश-सुवर्णानस्यैव प्रयच्छ। अयमपि द्यूतं शीलयतु। (च)

माथुरः। ता किं भोदु?। (१) (क)

दर्दु। यदि जेष्यति तदा दास्यति।

माथुरः। अह ण जिणादि। (ख)

दर्दु। तदा न दास्यति।

माथुरः। अह ण जुत्तं जप्पिदुं। एव्वं अक्खन्तो तुमं पअच्छ, धुत्तआ!। अहं पि णाम माथुरु धुत्तु जूदं मित्था आदंसआमि। असस्स वि अहं ण विभेमि। धुत्ता! खण्डिअ-वुत्तोसि तुमं। (ग)

(क) तत् किं भवतु?।

(ख) अथ न जयति?।

(ग) अथ न युक्तं जल्पितम्। एवमाचक्षाणस्त्वं प्रयच्छ धूर्त्तक। अहमपि नाम

(च) दर्दुरक इति। अन्यानेव स वाहकस्यैव, प्रयच्छतु धारभावेन अर्पयतु। अयमपि संवाहकः। शीलयतु आचरतु पुनरपि द्यूतक्रीडां करोत्वित्यर्थः।

(क) माथुर इति। तदित्यस्य अव्ययत्वात् तत इत्यर्थः।

[च] दर्दुरक। যদি ইহাই হয়, তবে শোন, তাহা হইলে আরও দশখানা মোহর উহার নিকট দাও, এও, পাশা খেলুক।

[ক] মাথুর। তাহাতে কি হইবে?।

দর্দুরক। যদি জয় করিতে পারে, তবে দিবে।

[খ] মাথুর। যদি জয় করিতে না পারে?।

দর্দুরক। তবে দিবে না।

---

(१) तत् किं।

दर्दु । अरे ! कः खण्डितवृत्तः ?।

माथुरः। तुमं क्खु खण्डिअवुत्तो। (घ)

दर्दु । पिता ते खण्डितवृत्तः। संवाहकस्य अपक्रमितुं संज्ञां ददाति। (ङ)

माथुरो धूर्त्तः, द्यूतं मिथ्या आदर्शयामि। अन्यस्मादपि अहं न बिभेमि। धूर्त्त! खण्डितवृत्तोऽसि त्वम्।

(घ) त्वं खलु खण्डितवृत्तः।

(ग) माथुर इति। जल्पितुं त्वया सार्द्धमनर्थकं वक्तुम्, न युक्तं तव वाक्यस्य असारत्वादिति भावः। एवं संवाहकस्य धारभावेन दशसुवर्णदानम्, आचचार्ण्णो भवन्। माथुरो धूर्त्तः परमनोभावज्ञाननिपुण इति भावः। आदर्शयामि आदर्शीकृत्य पर्य्यटामि द्यूतक्रीडायामात्मनो वृथा प्राधान्यं प्रदर्श्य परिभ्रमामीत्यर्थः; यदि तव बुद्ध्या प्रतारितो भवामीत्याशयः। अन्यस्मात् त्वद्भिन्नात् जनादपि अहं प्रतारणाया न बिभेमि। मथुरा-वासित्वेन महाचतुरत्वादिति भावः। खण्डितं छिन्नं वृत्तं चरितं यस्य सः दुश्चरित्रोऽसी-त्यर्थः, बहुशः परप्रतारणाकरणादित्याशयः।

(ङ) दर्दु इति। अपक्रमितुं पलायितुम्, संज्ञां सङ्केतम्, ददाति नयन-भङ्ग्येत्यर्थः।

(গ) মাথুর। তোমার সঙ্গে জল্পনা কবা উচিত নহে। ধূর্ত্ত! তুমি যখন এইরূপ বলিতেছ, তখন তুমিই দাও। আমিও, মাথুরনামে ধূর্ত্ত; যদি তোমাদ্বারা প্রতারিত হই, তবে মিথ্যা পাশা দেখাইয়া বেড়াই। আমি অন্য লোক হইতেও ভীত নহি। ধূর্ত্ত! তুমি চরিত্রহীন হইয়াছ।

দর্দুরক। ওরে! কে চরিত্রহীন ?।

[ঘ] মাথুর। তুমি চরিত্রহীন।

[ঙ] দর্দুরক। তোর বাপ চরিত্রহীন। [ পলাইবার জন্য সংবাহককে সঙ্কেত করিল। ]

माथुरः। गोसाविश्रापुत्ता! णं एव्वं ज्जेव जूदं तुए सेविदं?। (च)

दर्दु। मया एवं द्यूतमासेवितम्। (छ)

माथुरः। अले संवाहश्रा! पश्रच्छ तं दशसुवसं। (ज)

संवा। अज्ज दइस्सं, दाव दइस्सं। (झ)

माथुरः। कर्षति। (ञ)

दर्दु। मूर्ख! परोक्षे खलीकर्त्तुं शक्यते, न ममाग्रतः खलीकर्त्तुम्। (ट)

(च) वेश्यापुत्र। एवमेव द्यूतं त्वया सेवितम्?।

(ज) अरे संवाहक। प्रयच्छ तत् दशसुवर्णम्।

(झ) अद्य दास्यामि, तावत् दास्यामि।

[च] माथुर इति। 'गोसाविश्रा' इति देशीयपदं वेश्येति तदर्थः। एवमेव प्रतारणागमकर्मेव।

(छ) दर्दु इति। सगर्वोक्तिरियम्। एव महाचातुर्य्येण परान् प्रतार्य्येत्यर्थः।

(झ) संवा इति। तावत् सकलमेव। "यावत्तावच्च साकल्ये" इत्याद्यमरः।

(ञ) माथुर इति। कर्षति दशसुवर्णग्रहणार्थं संवाहकमिति शेषः।

(ट) दर्दु इति। परोक्षे मम असमक्षं, खलीकर्त्तुम् अधमीकर्त्तुम् आवज्ञीकर्त्तुमित्यर्थः। खलशब्दाभिधानं पूर्वमेव दर्शितम्।

---

[চ] মাথুর। ওরে বেশ্যাপুত্র! তুই এই ভাবেই পাশা খেলিয়াছিস্।

[ছ] দর্দুরক। আমি এই ভাবেই পাশা খেলিয়াছি।

[জ] মাথুর। ওরে সংবাহক! সেই দশখানা মোহর দে।

[ঝ] সংবাহক। আজ দিব, সমস্তই দিব।

(ঞ) মাথুর। (ধরিয়া টানিতে লাগিল)

মাথুরঃ সংবাহকমাকৃষ্য ঘোণায়াং মুষ্টিপ্রহারং দদাতি। সংবাহকঃ সশোণিতং মূর্চ্ছাং নাটয়ন্ ভূমৌ পততি। দর্দ্দুরক উপসৃত্য অন্তরয়তি। মাথুরো দর্দ্দুরং তাড়য়তি। দর্দ্দুরো বিপ্রতীপং তাড়য়তি। [ঠ]

**মাথুরঃ। অলে অলে দুট্ঠ! ছিণ্ণালিআপুত্তঅ! ফলং পি পাবিহিসি। (ড)**

**দর্দ্দুঃ। অরে মূর্খ! অহং ত্বয়া মার্গগত এব তাড়িতঃ; শ্বো যদি রাজকুলে তাড়য়িষ্যসি, তদা দ্রক্ষ্যসি। (ঢ)**

(ড) অরে অরে দুষ্ট! পুংশ্চলীপুত্রক! ফলমপি প্রাপ্স্যসি।

(ঠ) মাথুর ইতি। ঘোণায়াং নাসিকায়াম্। অন্তরয়তি তয়োর্মধ্যে স্থিত্বা ব্যবধানং করোতি। "বস্তু বস্তুং বিনা মধ্যে ব্যবধানেঽন্তরাত্মনি। বহির্যোগেঽবকাশে চ বিশেষেঽবসরেঽন্তরম্॥" ইত্যনেকার্থধ্বনিমঞ্জরী। বিপ্রতীপং বিপরীতম্।

(ড) মাথুর ইতি। ছিন্নালিআশব্দোঽপি দেশীয়ঃ পুংশ্চল্যর্থে। পুংশ্চলী কুলটা, তৎপুত্রক ইতি কুৎসায়াং কপ্রত্যয়ঃ।

(ঢ) দর্দ্দু ইতি। মার্গগত এব পথিকভূত এব, ন পুনরপরাধীতি কৃত্বা তাড়িত ইত্যর্থঃ; অপরাধেন বিনা পথিকস্য তাড়নমত্যন্তমেবানুচিতমিতি ভাবঃ। পুনশ্চ শ্বঃ পরদিনে, রাজকুলে রাজভবনে, যদি তাড়য়িষ্যসি অভিযোগমুপস্থাপ্য রাজাদেশমানীয়

(ট) দর্দ্দুরক। মূর্খ! আমার অসমক্ষে আবদ্ধ করিতে পারিতে; কিন্তু আমার সম্মুখে নহে।

(ঠ) ( মাথুর সংবাহককে আকর্ষণ করিয়া, তাহার নাসিকার উপরে মুষ্টি প্রহার করিল। সংবাহক শোণিতপাতের সহিত মূর্চ্ছার অভিনয় করিয়া ভূতলে পড়িল। দর্দ্দুরক নিকটে যাইয়া উভয়ের মধ্যে পড়িয়া ব্যবধান করিল। মাথুর দর্দ্দুরককে প্রহার করিল, দর্দ্দুরকও মাথুরকে প্রহার করিল )।

(ড) মাথুর। ওরে ওরে বেশ্যাপুত্র! তুই ইহার ফলও পাইবি।

माथुरः। एसु पेक्खिस्सं। (ण)

दर्दुरः। कथं द्रक्ष्यसि ?। (त)

माथुरः। प्रसार्य्य चक्षुषी। एव्वं पेक्खिस्सं। (थ)

दर्दुरो माथुरस्य पांशुना चक्षुषी पूरयित्वा संवाहकस्य अपक्रमितुं संज्ञां ददाति। माथुरोऽक्षिणी निगृह्य भूमौ पतति। संवाहकोऽपि अपक्रामति। [द]

दर्दुरः। स्वगतम्। प्रधानसभिको माथुरो मया विरोधितः। तस्मात् युज्यते स्थातुम्। कथितञ्च मम प्रियवयस्येन शर्व्विलकेन,

(ण) एष प्रेक्षिष्ये।

(थ) एवं प्रेक्षिष्ये।

राजानुचरैर्व्वाघातादिकं यदि कारयिष्यसीत्यर्थः। द्रक्ष्यसि तत्फलमिति तात्पर्य्यम्। अहमपि त्वां पथि प्राप्य पुनस्ताडयिष्यामीति भावः।

(त) दर्दुर इति। कथं केन प्रकारेण।

(द) दर्दुर इति। पांशुना धूल्या। निगृह्य पाणिभ्यां विधृत्य आच्छाद्येत्यर्थः। अपक्रामति पलायते।

अहो। असभ्यानां चरितमिदमतीवकौतुककरम्।

(ঢ) দর্দুরক। ওরে মূর্খ! পথে থাকিতেই তুই আমাকে প্রহার করিয়াছিস্, কাল যদি আবার রাজবাড়ীতে প্রহার করাইস্, তবে দেখিবি।

(ণ) মাথুর। এই আমিই দেখিব।

(ত) দর্দুরক। কি ভাবে দেখিবি ?।

(থ) মাথুর। ( চোখ দুইটা বিস্তৃত করিয়া ) এই ভাবে দেখিব।

(দ) দর্দুরক। ( ধূলি দিয়া, মাথুরের চোখ দুইটা পূর্ণ করিয়া, পলাইবার জন্য সংবাহককে সঙ্কেত করিল। মাথুর চোখ দুইটা ধরিয়া ভূতলে পড়িল। সংবাহক পলাইল। )

यथा किल, "आर्य्यकनामा गोपालदारकः सिद्धादेशेन समादिष्टो राजा भविष्यति इति सर्व्वश्च अस्मद्विधो जनः तमनुसरति"। तदहमपि तत्समीपमेव गच्छामि। इति निष्क्रान्तः। (ध)

संवा। सत्रास परिक्रम्य दृष्ट्वा। एशे कश्शवि अणपावुदपक्खदुआलके गुहे। ता एत्थ पविशिश्शं। प्रवेशं रूपयित्वा वसन्तसेनामालोक्य। अज्जे! शलणागदे म्हि। (न)

(न) एतत् कस्यापि अनपावृतपक्षद्वारकं गेहम्। तदत्र प्रविशामि। आर्य्ये! शरणागतोऽस्मि।

(ध) दर्द्दुर इति। शर्व्विलकेन तदाख्यं न केनचिज्जनेन। एतस्य चरितमपि परस्तात् व्यक्तीभविष्यति। आर्य्यकेति सञ्ज्ञाया कप्रत्ययः। गोपालदारको गोपपुत्रः। सिद्धो मन्त्रदेवतादिसिद्धः कश्चित् त्रिकालज्ञो लोकस्तस्य, आदिश्यते अनेनेति आदेशो वाक्यं तेन, समादिष्टो निर्द्दिष्टः। गच्छामीति। अन्यथा वर्त्तमानो राजा माथुरादिसभिकपक्षपातित्वेन माथुरकृताभियोगमात्रमेव मा निर्यातयिष्यतीति भावः।

अत्र आश्रयो नाम नाट्यालङ्कारः। यथा साहित्यदर्पणे—"ग्रहणं गुणवत् कार्य्यहेतोराश्रय उच्यते।"

(न) संवा इति। अनपावृतं कपाटाभ्यामनवरुद्धम् उद्घाटितकपाटमित्यर्थः। पक्षद्वारं पार्श्वद्वारं यस्य तत्।

(ध) দর্দ্দুরক। (স্বগত) সভাধ্যক্ষের সঙ্গে আমি বিবাদ করিলাম, অতএব এখানে আর থাকা উচিত নহে। প্রিয়সুহৃৎ শর্ব্বিলক আমার নিকট বলিয়াছেন যে, "সিদ্ধপুরুষের আদেশে আর্য্যকনামে গোপবালক রাজা হইবেন, এই নিমিত্ত আমাদের মত সকল লোকই তাঁহার অনুসরণ করিতেছে।" তা' আমিও তাঁহার নিকটই যাই। (এই বলিয়া চলিয়া গেল।)

(ন) সংবাহক। (ভয়ের সহিত পাদচারণপূর্ব্বক দেখিয়া) এই

वसन्त। अभअं सरणागदस्स। हञ्जे! ढक्केहि पक्खदुआरअं। (प)

चेटी। तथा करोति।

वसन्त। कुदो दे भअं?। (फ)

संवा। अज्जे! धणिकादो। (ब)

वसन्त। हञ्जे! संपदं अवावुणु पक्खदुआरअं। (भ)

(प) अभयं शरणागतस्य। हञ्जे! पिधेहि पक्षद्वारकम्।

(फ) कुतस्ते भयम्? (ब) आर्य्ये! धनिकात्।

(भ) हञ्जे! साम्प्रतमपावृणु पक्षद्वारकम्।

(प) वसन्त इति। भयस्याभावः अभयमिति अभावार्थे अव्ययीभावः। हञ्जे इति दास्याः सम्बोधनम्। "हण्डे हञ्जे हलाह्वानं नीचां चेटीं सखीं प्रति" इत्यमरः। पिधेहि कपाटाभ्यामावृणु।

(ब) संवा इति। धनिकात् धनवत उत्तमर्णात्।

(भ) वसन्त इति। अपावृणु कीलद्वारा रुन्धि। यथा न स धनिकः कपाटद्वयमपसार्य्य प्रवेष्टुमर्हतीति भावः।

কাহারও বাড়ীর পার্শ্বের দ্বার খোলা আছে। তা' এই বাড়ীতেই প্রবেশ করি। (প্রবেশ অভিনয় করিয়া, বসন্তসেনাকে দেখিয়া) আর্য্যে! আমি আপনার শরণাগত হইলাম।

(প) বসন্তসেনা। শরণাগতের কোন ভয় নাই। ওলো! পার্শ্বের দ্বার আবদ্ধ কর্।

দাসী। (তাহা করিল।)

(ফ) বসন্তসেনা। কাহা হইতে তোমার ভয়?।

(ব) সংবাহক। আর্য্যে! ধনী হইতে।

(ভ) বসন্তসেনা। ওলো! এখন পার্শ্বদ্বারে খিল দে।

संवा । आत्मगतम् । कधं धणिकादो तुलिदं शे भअकालणं । सुट्ठु क्खु एवं वुच्चदि—(म)

जे अत्तवलं जाणिअ भालं तुलिदं वहेइ माणुस्से ।

ताह खलणं ण जाअदि णअ कन्तालगदो विवज्जदि ॥१४॥

एत्थ लक्खिदो म्हि । (य)

(म) कथं धनिकात् तुलितमस्या भयकारणम् । सुष्ठु खल्वेवमुच्यते—

य आत्मबलं ज्ञात्वा भारं तुलितं वहति मनुष्यः ।

तस्य स्खलनं न जायते न च कान्तारगतो विपद्यते ॥१४॥

(य) अत्र लक्षितोऽस्मि ।

(म) संवा इति । अस्या वसन्तसेनायाः । तुलितं ममैव तुल्यम्, कीलहारा कपाट-दौषव्यवस्थापनादिति भावः ।

य इति । यो मनुष्यः, आत्मनो बलं शक्तिम्, ज्ञात्वा इयत्तया अवबुध्य, तुलितं स्वसदृशं निजवहनयोग्यमित्यर्थः, भारं वहति, तस्य मनुष्यस्य, स्खलनं भारस्य गुरुत्व-जनितं पतनम्, न जायते । तथा स कान्तारगतोऽपि दुर्गमपथचलितोऽपि न विपद्यते भारस्य दुर्वहतया न विपन्नो भवति । यस्तु आत्मबलमज्ञात्वा निजवहनायोग्यं गुरुतरं भारं वहति ; तस्य स्खलनं जायते, कान्तारगतश्च स विपद्यत इति भावः ।

अस्य प्राचीनमहाजनवाक्यत्वेन प्रकरणादिदोषासम्भवादलङ्कारनिरूपणमशक्यम् । "कान्तारो वर्त्म दुर्गमम्" इत्यमरः । आर्य्या जातिः ॥१४॥

(य) अत्रेति । अत्र "य आत्मबलम्—" इत्यादिमहाजनवाक्ये लक्षितोऽस्मि विषयोऽस्मि । तथा चाहम् आत्मनो धनबलमजानन् धनसाध्ये द्यूते प्रवृत्तः, इदानीन्तु तव हारितधनं दातुमशक्नुवन् विपन्न इति भावः ।

(म) সংবাহক। (স্বগত) ধনী হইতে আমারই মত ইহারও ভয়ের কারণ আছে। সুতরাং লোকে এ কথা ভালই বলে—

যে মানুষ নিজের বলের পরিমাণ বুঝিয়া যোগ্য ভার বহন করে, তাহার স্খলন হয় না এবং সে দুর্গম পথে চলিয়াও বিপন্ন হয় না ॥১৪॥

माथुरः। अक्षिणी प्रमृज्य द्यूतकरं प्रति। अले! देहि देहि। (र)

द्यूत। भट्टा! जावदेव अम्हे दद्दुरेण कलहाइदा, तावदेव सो गोहो अवक्कन्तो। (ल)

माथुरः। तस्स जूदकलस्स मुट्ठिप्पहालेण णासिका भग्गा आसि। ता एहि, लुहिरपहं अणुसरेम्ह। (व)

अनुसृत्य द्यूतकरः। भट्टा! वसन्तसेणागेहं पविट्ठो सो। (श)

(र) अरे। देहि देहि।

(ल) भर्त्तः। यावदेव वयं दर्दुरेण कलहायिताः, तावदेव स पुरुषोऽपक्रान्तः।

(व) तस्य द्यूतकरस्य मुष्टिप्रहारेण नासिका भग्ना आसीत्। तदेहि, रुधिरपथमनुसरावः।

(श) भर्त्तः। वसन्तसेनागेहं प्रविष्टः सः।

(र) माथुर इति। द्यूतकरं प्रति स्ववाक्यश्रवणार्थमिदं वचनमिति भावः।

(ल) द्यूत इति। कलहायिताः कलहं कृतवन्तः। कलहायधातोरकर्म्मकत्वात् कर्त्तरि क्तः। स पुरुषः संवाहकः, अपक्रान्तः पलायितः।

(व) माथुर इति। मम मुष्टिप्रहारेण तस्य द्यूतकरस्य नासिका भग्नेत्यन्वयः। रुधिरपथं रुधिरपतनपथम्। तथा सति तं प्राप्नुव इति भावः।

(श) अन्विति। रुधिरपतनपथमनुसरन्तं माथुरमनुसृत्येत्यर्थः। भर्त्तरिति। एतद्वसन्तसेनागेहद्वार एव रुधिरपतनपथस्यावसानादिति भावः।

(য) আমি এই কথারই লক্ষ্য হইয়াছি।

(র) মাথুর। (চোখ মুছিয়া দ্যূতকরের প্রতি) ওরে! দে দে।

(ল) দ্যূতকর। মহাশয়! আমরা যে পর্য্যন্ত দর্দুরকের সঙ্গে ঝগড়া করিতেছিলাম, তাহার মধ্যেই সে বেটা পলাইয়াছে।

(ব) মাথুর। মুষ্টিপ্রহারে সেই দ্যূতকরের নাসিকা ভগ্ন হইয়াছিল। তা' আইস, রক্তের পথ অনুসরণ করি।

माथुरः। भूदाइं सुवस्राइं। (ष)

दूत। लाअउलं गदुअ णिवेदेम्ह ?। (स)

माथुरः। एस धूत्तो इदो णिक्कमिअ अस्सत्त गमिस्सदि; ता उअरोधेणेव्व गेण्ह्णेम्ह। (ह)

वसन्तसेना मदनिकायाः संज्ञा ददाति। (च)

मद। कुदो अज्जो ? को वा अज्जो ? कस्स वा अज्जो ? किंवा विक्तिं अज्जो उवजीअदि ? कुदो वा भअं ?। (क)

(ष) भूतानि सुवर्णानि।

(स) राजकुलं गत्वा निवेदयामः ?।

(ह) एष धूर्त्त इतो निष्क्रम्य अन्यत्र गमिष्यति, तदुपरोधेनैव गृह्णीवः।

(ष) माथुर इति। सुवर्णानि दशसुवर्णपरिमितस्वर्णानि, भूतानि सम्पन्नानि, तस्य संवाहकस्य वसन्तसेनामाश्रितत्वात् उदारया च तया तस्य दशसुवर्णस्य दातव्यत्वादिति भावः।

(स) दूत इति। वसन्तसेना यदि न दद्यात्, राजा तु दापयेदेवेति भावः।

(ह) माथुर इति। अन्यत्र गमिष्यति, आवयोरितो गमने इति भावः। उपरोधेनैव वसन्तसेना प्रति अनुरोधेनैव।

(च) वसन्त इति। संज्ञा ददाति, नयनेङ्गितेनेति शेषः। सर्वं प्रष्टुमिति भावः।

(শ) (অনুসরণ করিয়া) দ্যূতকর। মহাশয়! সে বেটা বসন্তসেনার বাড়ীতে প্রবেশ করিয়াছে।

(ষ) মাথুর। (তাহা হইলে) সোণাগুলি পাইয়াছি।

(স) দ্যূতকর। রাজবাড়ী যাইয়া জানাই ?।

(হ) মাথুর। (তাহা হইলে) এই ধূর্ত্তবেটা এখান হইতে বাহির হইয়া অন্যত্র যাইবে। তা' অনুরোধ করিয়াই লইব।

(ক্ষ) বসন্তসেনা মদনিকাকে সঙ্কেত করিল।

संवा। शुणादु अज्जआ। अज्जे! पाड़लिउत्तं मे जम्म-भूमी, गहवइदालके हगे, संवाहअस्स वित्तिं उवजीआमि। (ख)

वसन्त। सुउमारा क्खु कला सिक्खिदा अज्जेण। (ग)

संवा। अज्जए! कलेत्ति सिक्खिदा आजीविआ दाणिं संवुत्ता। (घ)

(क) कुत आर्य्यः? को वा आर्य्यः? कस्य वा आर्य्यः? किं वा वृत्तिम् आर्य्य उपजीवति? कुतो वा भयम्?।

(ख) शृणोतु आर्य्या। आर्य्ये। पाटलिपुत्रं मे जन्मभूमिः, गृहपतिदारकोऽहम्, संवाहकस्य वृत्तिमुपजीवामि।

(ग) सुकुमारा खलु कला शिक्षिता आर्य्येण।

(क) मद इति। आर्य्यः सभ्यो भवानिति सर्व्वत्रार्थः। कुतो देशादागत इति शेषः। कस्य सम्बन्धी, कस्तवाभिभावक इत्यर्थः। वृत्तिं जीविकानिर्वाहोपायम्, उप-जीवति आश्रयति।

(ख) संवा इति। गृहपतिदारको गृहस्थपुत्रः, संवाहकस्य गात्रसम्मर्द्दकस्य, वृत्तिं कार्य्यम्, उपजीवामि आश्रयामि।

(ग) वसन्त इति। कला कलाविद्या, गात्रसंवाहनस्य कलाविद्यान्तर्गतत्वात्।

(घ) संवा इति। सा विद्येति शेषः। आजीविका जीवननिर्वाहोपायः।

(क) মদনিকা। আপনি কোথা হইতে আসিলেন? আপনি কে? আপনি কাহার? কোন্ বৃত্তি অবলম্বন করিয়া আপনি জীবন ধারণ করেন? কাহা হইতে বা আপনার ভয়?।

[খ] সংবাহক। আপনি শুনুন। আর্য্যে। পাটলীপুত্র আমার জন্মভূমি, আমি গৃহস্থের পুত্র, গাত্রসম্মর্দ্দকের বৃত্তি অবলম্বন করিয়া আমি জীবন ধারণ করি।

[গ] বসন্তসেনা। আপনি কোমল কলাবিদ্যা শিক্ষা করিয়াছেন।

চেটী। অদিণিব্বিণ্ণং অজ্জেণ পড়িবঅণং দিণ্ণং, তদো তদো ?। (ঙ)

সংবা। তদো অজ্জএ! এসো ণিজগেহে আহিণ্ডকাণং মুহাদো সুণিঅ, অপুব্ব-দেস-দংসণ-কুদূহলেণ ইহ আগদে। ইহ বি মএ পবিসিঅ উজ্জইণিং এক্কে অজ্জে সুস্সুসিদে, জে তালিসো পিঅদংসণো পিঅবাদী, দইঅ ণ কিত্তেদি, অবকিদং বিস্সরেদি। কিং বহুণা উত্তেণ, দক্খিণদাএ পরকেরঅং বিঅ অত্তাণঅং অবগচ্ছদি, সরণাগতবচ্ছলে অ। (চ)

(ঙ) অতিনির্ব্বিণ্ণমার্য্যেণ প্রতিবচনং দত্তম্। ততস্ততঃ ?।

(চ) তত আর্য্যে ! এষ নিজগৃহে আহিণ্ডকানাং মুখাৎ শ্রুত্বা অপূর্ব্বদেশ-দর্শন-কুতূহলেন ইহাগতঃ। ইহাপি ময়া প্রবিশ্য উজ্জয়িনীম্, এক আর্য্যঃ শুশ্রূষিতঃ ; যস্তাদৃশঃ প্রিয়দর্শনঃ, প্রিয়বাদী, দত্ত্বা ন কীর্ত্তয়তি, অপকৃতং বিস্মরতি। কিং বহুনা উক্তেন, দক্ষিণতয়া পরকীয়মিব আত্মানমবগচ্ছতি, শরণাগতবৎসলশ্চ।

(ঘ) আর্য্যে। কলেতি শিক্ষিতা, আজীবিকা ইদানীং সংবৃত্তা।

(ঙ) চেটী ইতি। অতি অত্যন্তং নির্ব্বিণ্ণং নির্ব্বেদো যস্মিন্ তৎ, দারিদ্র্যজনিতস্বাবমাননাসূচকমিত্যর্থঃ।

(চ) সংবা ইতি। এষঃ অহম্। আহিণ্ডকানাং পর্য্যটকানাম্, "হিণ্ডি গতৌ" ইতি ধাত্বর্থানুসারাৎ। ইহ অবন্তিদেশে। দক্ষিণতয়া উদারতয়া।

[ঘ] সংবাহক। আর্য্যে! কলা বলিয়া শিক্ষা করিয়াছিলাম, কিন্তু এখন তাহাই জীবিকানির্ব্বাহের উপায় হইয়াছে।

[ঙ] মদনিকা। আপনি অত্যন্ত নির্ব্বেদসূচক উত্তর দিয়াছেন। তা'র পর ? তা'র পর ?।

[চ] সংবাহক। তা'র পর, আর্য্যে! নিজ বাড়ীতে থাকিয়াই আমি পর্য্যটকদিগের মুখে শুনিয়া, অপূর্ব্ব দেশ দেখিবার কৌতুকে এই

चेटी। को दाणिं अज्जआए मणोरहन्तरस्स गुणाइं चोरिअ उज्जइणिं अलङ्करेदि ?। (छ)

वसन्त। साहु, हञ्जे ! साहु। मए वि एव्वं ज्जेव हिअएण मन्तिदं। (ज)

चेटी। अज्ज ! तदो तदो ?। (झ)

संवा। अज्जए ! सो दाणिं अणुक्कोसकिदेहिं पदाणेहिं। (ञ)

(छ) क इदानीमार्य्याया मनोरथान्तरस्य गुणान् चोरयित्वा उज्जयिनीमलङ्करोति ?।

(ज) साधु, हञ्जे ! साधु। मयापि एवमेव हृदयेन मन्त्रितम्।

[झ] आर्य्ये ! ततस्ततः ?। [ञ] आर्य्ये ! स इदानीमनुक्रोशकृतैः प्रदानैः।

(छ) चेटी इति। आर्य्याया वसन्तसेनायाः, मनोरथान्तरस्य अभिलाषान्तरस्य इष्टस्य चारुदत्तस्यत्यर्थः। चोरयित्वा गृहीत्वेत्यर्थः।

(ज) वसन्त इति। हृदयेन सह मन्त्रितम् आलोचितम्।

অবন্তীদেশে আসিয়াছি। আমি এদেশে আসিয়া, উজ্জয়িনীনগরে প্রবেশ করিয়া, এক ভদ্রলোকের পরিচর্য্যা করিয়াছিলাম, যিনি সেইরূপ প্রিয়দর্শন ও প্রিয়বাদী, দান করিয়া তাহা কীর্ত্তন করেন না, অপকার বিস্মৃত হন, বেশী বলিয়া কি হইবে, তিনি উদারতানিবন্ধন আপনাকেও পরকীয়ের ন্যায় মনে করেন এবং শরণাগতবৎসল।

[ছ] মদনিকা। কে আর্য্যার (বসন্তসেনার) অভিলাষবর্ত্তী লোকের গুণ অপহরণ করিয়া, উজ্জয়িনীকে অলঙ্কৃত করিতেছে ?।

[জ] বসন্তসেনা। ভাল ওলো ! ভাল, আমিও মনের সঙ্গে এইরূপই আলোচনা করিতেছিলাম।

[ঝ] মদনিকা। ভদ্র ! তা'র পর ? তা'র পর ?।

वसन्त। किं उवरतविह्वो संवुत्तो?। (ट)

संवा। अणाचक्खिदे ज्जेव कधं अज्जआए विस्सादं। (ठ)

वसन्त। किं एत्थ जाणीअदि। दुल्लहा गुणा विह्वा अ। अपेएसु तड़ाएसु वहुदरं उदअं भोदि। (ड)

चेटी। अज्ज! किंणामधेओ क्खु सो?। (ढ)

[ट] किमुपरतविभवः संवृत्तः?।

[ठ] अनाख्यातमेव कथमार्य्यया विज्ञातम्?।

[ड] किमत्र ज्ञायते। दुर्लभा गुणा विभवाश्च। अपेयेषु तडागेषु बहुतरमुदकं भवति।

[ढ] आर्य्य! किंनामधेयः खलु सः?।

(ञ) संवा इति। अनुक्रोशेन दयया क्रतः। "कृपा दयानुकम्पा स्यादनुक्रोशः" इत्यमरः।

(ट) वसन्त इति। उपरतविभवो विनष्टधनसम्पत्तिः।

(ड) वसन्त इति। दुर्लभा गुणा विभवाश्च एकाधारे इति शेषः। दयादिगुणवति न विभवाः, विभववति च न दयादयो गुणा विद्यन्त इति भावः। ननु दयादिगुणहीने कथं विभवा भवन्तीत्याह अपेयेष्विति। अपेयेषु दुष्टजलत्वात् पातुमयोग्येषु। अत्र जलानामपेयत्वात् तदाधाराणां तडागानामपि अपेयत्वमुपचर्य्यते। तथा च यथा अपेयेषु तडागेषु बहुतरमुदकं भवति, तथा दयादिगुणहीनेषु पुरुषेषु अयाच्यमानेषु बहुतरं धनं भवति; तथापि नैतौ श्लाघनीयाविति भावः। अतएवात्र समात् समप्रतीतिरूपा अप्रस्तुतप्रशंसालङ्कारः।

[ঞ] সংবাহক। আর্য্যে! সেই মহাত্মা এখন দয়াকৃত দানে—

[ট] বসন্তসেনা। কি ধনহীন হইয়াছেন?।

[ঠ] সংবাহক। আপনি যে না বলা সত্ত্বেও বুঝিয়াছেন।

[ড] বসন্তসেনা। এ বিষয়ে আর বুঝিব কি। একাধারে গুণ ও ধন দুর্লভ। পানের অযোগ্য জলাশয়ে বহুতর জল হইয়া থাকে।

संवा। अज्जे! के दाणिं तस्स भूदल-मिअंकस्स णामं ण जाणादि। सो क्खु सेट्ठिचत्तले पडिवसदि, सलाहणिज्जणामधेए अज्जचालुदत्ते णाम। (ण)

वसन्त। सहर्षमासनादवतीर्य्य। अज्जस्स अत्तणकेरकं एदं गेहं। हञ्जे! देहि से आसणं, तालविण्टअं गेण्ह। परिस्समो अज्जस्स बाधेदि। (त)

चेटी। तथा करोति।

[ण] आर्य्ये! क इदानीं तस्य भूतलमृगाङ्कस्य नाम न जानाति। स खलु श्रेष्ठिचत्वरे प्रतिवसति, श्लाघनीयनामधेय आर्य्यचारुदत्तो नाम।

[त] आर्य्यस्य आत्मीयमेतद्गेहम्। हञ्जे! देहि अस्य आसनम्, तालवृन्तकं गृहाण, परिश्रम आर्य्यस्य बाधते।

(ण) सवा इति। भूतलस्य मृगाङ्कश्चन्द्र इव तस्य। परो नामशब्दः प्रसिद्धार्थः। "पाडलिउत्तं मे जम्मभूमी" इत्यारभ्य एतदन्तसन्दर्भे आख्यानं नाम नाट्यालङ्कारः— "आख्यानं पूर्ववृत्तोक्तिः" इति लक्षणात्।

(त) वसन्त इति। आत्मीयं स्वकीयं चारुदत्तसम्बन्धित्वादिति भावः। आर्य्यस्य गात्रं बाधते पीडयतीत्यर्थः।

अत्र प्रहर्षो नाम नाट्यालङ्कारः—"प्रहर्षः प्रमदाधिक्यम्" इति लक्षणात्।

[ঢ] মদনিকা। ভদ্র! তাঁহার নাম কি?।

[ণ] সংবাহক। আর্য্যে! সেই ভূতলস্থ চন্দ্রের নাম কে না জানে?। তিনি বণিক্‌পাড়ায় বাস করেন, তাঁহার প্রশংসনীয় নাম— আর্য্য চারুদত্ত।

[ত] বসন্তসেনা। (আনন্দের সহিত আসন হইতে নামিয়া) এই বাড়ী মহাশয়ের নিজের। ওলো! ইঁহাকে আসন দে, পাখা ধর। পরিশ্রম ইঁহাকে কষ্ট দিতেছে।

संवा। स्वगतम्। कधं अज्जचालुदत्तस्स णामसङ्कित्तणेण ईदिशे मे आदले। शाहु, अज्जचालुदत्त! शाहु, पहुवीए तुमं एक्के जीवशि, शेशे उण जणे शशदि। इति पादयोर्निपत्य। भोदु, अज्जए! भोदु। आशणे णिशीददु अज्जआ। (थ)

वसन्त। आसने समुपविश्य। अज्ज! कुदो सो धणिओ?। (द)

संवा। शक्कालधणे क्खु शज्जणे
कश्श ण होइ चलाचले धणे?।

[थ] कथम् आर्य्यचारुदत्तस्य नामसङ्कीर्त्तनेन ईदृशो मे आदरः। साधु, आर्य्य-चारुदत्त! साधु; पृथिव्यां त्वमेको जीवसि; शेषः पुनर्जनः श्वसिति। भवतु, आर्य्ये! भवतु। आसने निषीदतु आर्य्या।

[द] आर्य्य। कुतः स धनिकः?।

सत्कारधनः खलु सज्जनः, कस्य न भवति चलाचलं धनम्।
यः पूजयितुमपि जानाति स पूजाविशेषमपि जानाति ॥१५॥

(थ) संवा इति। जीवसि, जीवनप्रयोजनीभूतसत्कार्य्यकरणात्। श्वसिति, स्वतः सम्पन्नमात्रमेव श्वासं तथा सम्पादयति भवादृशसत्कार्य्याकरणादिति भावः। निषीदतु उपविशतु।

(द) वसन्त इति। स धनिकः यस्तवान्तिके दशसुवर्णं प्राप्स्यति।

মদনিকা। ( সেইরূপ করিল )

[থ] সংবাহক। ( স্বগত ) আর্য্য চারুদত্তের নাম কীর্ত্তন করা-মাত্রই এরূপ আদব হইতেছে কেন? সাধু, আর্য্য চারুদত্ত! সাধু, পৃথিবীতে আপনি একাই জীবিত আছেন, অবশিষ্ট লোক কেবল শ্বাস-প্রশ্বাস করিতেছে। [ এই বলিয়া বসন্তসেনার পায়ের উপর পড়িয়া ] হউক, আপনি আসনে উপবেশন করুন।

[দ] বসন্তসেনা। ( আসনে বসিয়া ) ভদ্র। সে ধনী কোথায়?।

जे पूइदुं पि जाणादि (१)
सो पूआविसेसं पि जाणादि ॥१५॥

वसन्त। तदो तदो ?। (ध)

संवा। तदो, तेण अज्जेण सविन्तो पलिचालके किदोम्हि

[ध] ततस्ततः ?।

वसन्तसेनाव्यवहारजनितविस्मयाभिभूततया तत्प्रश्नमश्रुण्वन्नेव स्ववाक्यशेषं समापयति सत्कारेति। सत्कारः निराश्रयादिभ्य आश्रयदानादिकं सत्कार्यमेव धनं धनवदादरणीयं यस्य स तादृशो जन एव सज्जनो भवति, न पुनर्धनिमात्रमित्यर्थः। कथं न धनिमात्रं सज्जन इत्याह चलाचलम् अत्यन्तचञ्चलं क्षणिकमित्यर्थः, धनं कस्य जनस्य न भवति, अपि तु सर्वस्यैव भवतीत्यर्थः। अतएव धनिमात्रमेव न सज्जन इति भावः। वसन्तसेनाया व्यवहारं प्रशंसन्नेव पुनराह-- यो जनः, पूजयितुमपि परान् सम्मानयितुमपि जानाति; स जनः पूजायाः सम्माननाया विशेष प्रकारमपि जानाति। तथा चेयं वसन्तसेना निराश्रयं मामाश्रयदानेनानुगृह्णती आर्यसम्बोधनादिना सम्मानयन्ती आसनादवतरणेन सम्मानविशेष प्रदर्शयन्ती नितान्तसज्जनतया अतीवप्रशंसनीयेति भावः।

अतएवात्र अप्रस्तुतजनसामान्याभिधानात् वसन्तसेनारूपप्रस्तुतजनविशेषप्रतीतेरप्रस्तुतप्रशंसालङ्कारः, तथा खलुशब्दस्य निश्चयार्थतया 'सत्कारधन एव सज्जनः' इत्युक्तेः 'न तु धनिमात्रम्' इत्यन्यार्थव्यपोहनादार्थी परिसंख्या, वाक्यार्थहेतुकं काव्यलिङ्गञ्च इत्येतेषामङ्गाङ्गिभावेन सङ्करः। किन्तु जानातीति पदस्य द्विरुक्तत्वेऽपि न कथितपदतादोषः, साहित्यदर्पणादौ तस्य उद्देश्यप्रतिनिर्देश्यव्यतिरिक्तविषयकत्वकल्पनात्।

"मात्रासमकं (नाम छन्दः) चलाचलि, धणं, से इत्यकारत्रय लघु, छन्दोऽनुरोधात्" इति पृथ्वीधरः ॥१५॥

---

সজ্জনের পক্ষে সৎকার্য্যই ধন, ক্ষণস্থায়ী বাস্তবিক ধন কাহার না হয়? যে সম্মান করিতে জানে, সে সম্মানবিশেষও জানে ॥১৫॥

[ধ] বসন্তসেনা। তা'র পর, তা'র পর ?।

---

(१) जे पूइदुं पि ण जाणादि।

चालित्तावशेशे श्र तस्सिं जूदोवजीविम्हि शंवुत्ते। तदो, भाश्र-धेश्रविशमदाए दश-शुवस्तश्रं जूदे हालिदं। (न)

माथुर:। उच्छादिदोम्हि मुसिदोम्हि। (प)

संवा। एदे दे शहिश्र-जूदिश्रला मं श्रणुश्रंधश्रन्ति। शंपदं शुणिश्र श्रज्जश्रा पमाणं। (फ)

[न] तत:, तेन आर्य्येण सवृत्ति: परिचारक: क्वतोऽस्मि। चारित्रावशेषे च तस्मिन् द्यूतोपजीवी अस्मि संवृत्त:। ततो भागधेयविषमतया दशसुवर्णं द्यूते हारितम्।

[प] उत्सादितोऽस्मि मुषितोऽस्मि।

[फ] एतौ तौ सभिकद्यूतकरौ मामनुसन्धत्त:। साम्प्रत श्रुत्वा आर्य्या प्रमाणम्।

(न) सवा इति। तेन चारुदत्तेन। वृत्त्या वेतनेन सह वर्त्तते सवृत्ति:, परिचारक: गात्रसंवाहनकारी भृत्य:। चारित्रं सच्चरित्रमेव अवशेषो यस्य तस्मिन् विनष्टधन इत्यर्थ:, तस्मिन् चारुदत्ते। भागधेयविषमतया भाग्यविपर्य्ययेण।

(प) माथुर इति। उत्सादित उत्सन्नतां प्रापित:, गरुतरशास्त्रानिरोधात् मुषित-श्चोरित:, अवश्यप्राप्यस्य अदानेन अपहरणात्। उभयत्रापि पलायितेन स वाहकेनेति शेष:।

(फ) संवा इति। एतौ "उच्छादिदोम्हि" इत्यादिवक्तारौ। अनुसन्धत्त: अन्वि-ष्यत:। आर्य्या वसन्तसेना, प्रमाणं कर्त्तव्याकर्त्तव्यविवेचिकेत्यर्थ:।

[न] संवाहक। তা'র পর, সেই মহাত্মা বেতনের সহিত আমাকে পরিচারক করিলেন। তাহার পর তাঁহার সচ্চরিত্রমাত্র অবশিষ্ট থাকিলে ( তিনি দরিদ্র হইয়া পড়িলে ) আমি দ্যূতোপজীবী হইয়াছি। তা'র পর ভাগ্যবিপর্য্যয়বশতঃ দ্যূতে দশখানি মোহর হারিয়াছি।

[প] মাথুর। আমাকে উৎসন্ন করিয়াছে, আমার দ্রব্য অপহরণ করিয়াছে।

[ফ] সংবাহক। এই সেই সভাধ্যক্ষ ও দ্যূতকর আমার অনুসন্ধান করিতেছে। এই সব শুনিয়া আপনি যাহা করেন।

वसन्त। मदणिए! वास-पादव-विसण्ठुलदाए पक्खिणो इदो तदो वि आहिण्डन्ति। हञ्जे! ता गच्छ, एदाणं सहिअ-जूदिअराणं "अअं अज्जो ज्जेव पड़िवादेदि" त्ति इमं हत्था-भरणं तुमं देहि। इति हस्तात् कटकमाकृष्य चेट्याः प्रयच्छति। (ब)

चेटी। गृहीत्वा। जं अज्जआ आणवेदि। इति निष्क्रान्ता। (भ)

(ब) मदनिके। वास-पादप-विसष्ठुलतया पक्षिण इतस्ततोऽपि आहिण्डन्ते। हञ्जे! तद्गच्छ, एतयोः सभिकद्यूतकरयोः "अयमार्य्य एव प्रतिपादयति" इति, इदं हस्ताभरणं त्वं देहि।

(भ) यदार्य्या आज्ञापयति।

(ब) वसन्त इति। वासपादपस्य आवासवृक्षस्य विसष्ठुलतया वात्यादिना विपर्य्यस्त-तया। आहिण्डन्ते विचरन्ति। तथा च यथा आवासवृक्षस्य विपर्य्यस्ततया पक्षिण इतस्ततो विचरन्ति, तथा आश्रिता जना अपि आश्रयजनस्य दशाविपर्य्यये इतस्ततो विचरन्तीति चारुदत्तस्य दशाविपर्य्ययात् तदाश्रित संवाहकोऽपि एव विचरतीति नात्र किञ्चिद्वैचित्र्यमिति भावः।

अतएवात्रापि समात् समप्रतीतिरूपा अप्रस्तुतप्रशंसालङ्कारः।

अयमार्य्य एव संवाहक एव, प्रतिपादयति इदं ददाति। इति उक्त्वा इति शेषः।

अत्र साहाय्यं नाम नाट्यालङ्कारः—"साहाय्यं सङ्कटे यत् स्यात्सानुकूल्यं परस्य च" इति साहित्यदर्पणलक्षणात्।

(ব) বসন্তসেনা। মদনিকা। বাসবৃক্ষ বিপর্য্যস্ত হইলে পক্ষিগণ ইতস্ততঃ বিচরণ করে। অতএব যাও, 'এই সংবাহকই দিতেছেন' এই কথা বলিয়া, এই সভাধ্যক্ষ ও দ্যূতকরকে এই হস্তাভরণখানা দাও। ( ইহা বলিয়া হস্ত হইতে বলয় খুলিয়া মদনিকার নিকট দিল )

(ভ) মদনিকা। ( গ্রহণ করিয়া ) আপনি যাহা আদেশ করেন। ( এই বলিয়া চলিয়া গেল। )

মাথুরঃ। উক্খাদিদোম্হি মুসিদোম্হি। (ম)

চেটী। জধা এদে উদ্ধং পেক্খন্তি, দীহং ণীসসন্তি, অহিলহন্তি অ দুআর-ণিহিদ-লোঅণা; তধা তক্কেমি-এদে দে সহিঅজূদিঅরা হুবিস্সন্তি। উপগম্য। অজ্জ! বন্দামি। (য)

মাথুরঃ। সুহং তুএ হোদু। (র)

চেটী। অজ্জ! কদরো (১) তুহ্মাণং সহিঅো?। (ল)

মাথুরঃ। কস্স তুমং তণুমজ্ঝে!

অহরেণ রদ-দট্ঠ-দুব্বিণীদেণ।

(ম) উৎসাদিতোঽস্মি, মুষিতোঽস্মি।

(য) যথা এতৌ ঊর্দ্ধং প্রেক্ষেতে, দীর্ঘং নিশ্বসিতঃ, অভিলপতশ্চ দ্বারনিহিতলোচনৌ, তথা তর্কয়ামি—এতৌ তৌ সভিকদ্যূতকরৌ ভবিষ্যতঃ। আর্য্য। বন্দে।

(র) সুখং তব ভবতু।

(ল) আর্য্য! কতরো যুবয়োঃ সভিকঃ?।

(য) চেটী ইতি। অভিলপতঃ পরস্পরমালপতঃ। প্রাপ্তমনধিকারী ন প্রাপ্নুয়াদিত্যত ইয়ং বুদ্ধিমত্যাঃ পর্য্যালোচনা ইতি বোধ্যম্।

(ম) মাথুর। আমাকে উৎসন্ন করিয়াছে, আমার দ্রব্য অপহরণ করিয়াছে।

(য) মদনিকা। যখন ইহারা উপরের দিকে চাহিতেছে, দীর্ঘনিশ্বাস ত্যাগ করিতেছে এবং দ্বারে দৃষ্টি স্থাপন করিয়া আলাপ করিতেছে; তখন আমি মনে করি—ইহারাই সেই সভাধ্যক্ষ ও দ্যূতকর হইবে। (নিকটে যাইয়া) মহাশয়! প্রণাম।

(র) মাথুর। তোমার সুখ হউক।

(ল) মদনিকা। মহাশয়! আপনাদের মধ্যে কে সভাধ্যক্ষ?।

(১) কদমো।

जप्पसि मणोहल-वअणं
आलोअन्ती कड़क्खेण ॥१६॥

णत्थि मम विहवो, अस्सत्त व्वज। (व)

चेटी। जइ ईदिसाइं णं मन्तेसि, ता ण होसि जूदिअरो। अत्थि कोवि तुम्हाणं धारओ ?। (अ)

कस्य त्व तनुमध्ये। अधरेण रत-दष्टदुर्विनीतेन।
जल्पसि मनोहरवचनम् आलोकयन्ती कटाक्षेण ॥१६॥

(व) नास्ति मम विभवः, अन्यत्र व्रज।

(अ) यदि ईदृशानि ननु मन्त्रयसि, तदा न भवसि द्यूतकरः। अस्ति कोऽपि युष्माकं धारकः ?।

---

कस्येति। हे तनुमध्ये। कृशकटिदेशे। त्व कस्य कस्तवाधिकारीत्यर्थः। रते सुरतसमये दष्टो नायकेन कृतदन्तदंशनः अतएव दुर्विनीतः प्रगल्भस्तेन, अधरेण उपलक्षिता, कटाक्षेण आलोकयन्ती सती, मनोहरवचनं जल्पसि ब्रवीषि।

आर्य्या जातिः। तृतीयचरणान्तिमाक्षरस्य गुरोरपि लघुत्वम्, चतुर्थचरणान्तिमाक्षरस्य तु लघोरपि गुरुत्वम्, अन्तस्थत्वात् ॥१६॥

(व) नास्तीति। विभवः—तव रमणशुल्कदानोपयोगि धनम्। रन्तुमामन्त्रणाय इयमुपस्थिता इति सम्भावनया इयमुक्तिः।

(अ) चेटी इति। नन्विति सम्बोधने। ईदृशानि वाक्यानि मन्त्रयसि ब्रवीषि द्यूतकरो न भवसीति, द्यूतकराणां स्वमुखेनैव स्वनिर्धनत्वप्रकाशाकरणात् निर्धनस्य इतरद्यूतकरैरग्रहणीयत्वादिति भावः। पुनरस्य विशेषेण पृच्छति अस्तीति।

धारयतीति धारकः ऋणी।

---

মাথুর। হে কৃশমধ্যে। তোমার ওষ্ঠখানি চুম্বনকালীন দংশননিবন্ধন ধৃষ্ট হইয়াছে। তুমি কটাক্ষদ্বারা দর্শন করতঃ, মনোহর বাক্য বলিতেছ, তুমি কাহার ? ॥১৬॥

(ব) আমার টাকা নাই, তুমি অন্যত্র যাও।

माथुरः। अत्थि दशसुवस्सं धालेदि। किं तस्स ?। (ष)

चेटी। तस्स कारणादो अज्जआ इमं हत्याभरणं पड़िवादेदि। णहि णहि, सो ज्जेव पड़िवादेदि। (स)

माथुरः। सहर्षं गृहीत्वा। अले! भणेसि तं कुलपुत्तं—"भूदं तुए गण्डे (१)। आअच्छ, पुणो जूदं रमस्स।" इति निष्क्रान्तौ। (ह)

चेटी। वसन्तसेनामुपसृत्य। अज्जए! पड़ितुट्टा गदा सहिअजूदिअरा। (क्ष)

(ष) अस्ति, दशसुवर्णं धारयति। किं तस्य ?।

(स) तस्य कारणात् आर्य्या इदं हस्ताभरणं प्रतिपादयति। नहि नहि, स एव प्रतिपादयति।

(ह) अरे। भणिष्यसि तं कुलपुत्रम्—'भूतस्तव गण्डः, आगच्छ पुनर्द्यूतं रमय'।

(स) चेटी इति। आर्य्या वसन्तसेना। प्रतिपादयति ददाति।

(ह) माथुर इति। कुलपुत्रं सद्वंशसन्तानम्, छावितधनदानेन सद्भावव्यवहारादिति भावः। गण्डः वाचा नियमितं धनम्।

(শ) মদনিকা। আপনি যদি এইরূপ বলেন, তবে আপনি দ্যূতকর নন'। কেহ আপনাদের কিছু ধারে কি?

(য) মাথুর। সেরূপ লোক আছে, দশখানি মোহর ধারে। তাহার কি হইয়াছে?।

(স) মদনিকা। তাঁহার জন্য আর্য্যা বসন্তসেনা এই হস্তাভরণ দান করিতেছেন। না না, তিনিই দান করিতেছেন।

(হ) মাথুর। (আনন্দের সহিত গ্রহণ করিয়া) ওহে! সেই সদ্বংশের পুত্রকে বলিও—'তোমার পণ দেওয়া হইয়াছে'। আইস, পুনরায় দ্যূতক্রীড়া কর। (এই বলিয়া চলিয়া গেল।)

---

(१) गण्डः।

वसन्त। ता गच्छदु, अज्ज बन्धुअणो समस्ससदु। (क)

संवा। अज्जए! जइ एव्वं, ता इअं कला परिअणहत्थ-गदा करीअदु। (ख)

वसन्त। अज्ज! जस्स कारणादो इअं कला सिक्खीअदि, सो ज्जेव अज्जेण सुस्सूसिद-पुरुव्वो सुस्सूसिदव्वो। (ग)

(च) आर्य्ये! परितुष्टौ गतौ सभिक-द्यूतकरौ।

(क) तद्गच्छतु, अद्य बन्धुजनः समाश्वसितु।

(ख) आर्य्ये! यद्येवम्, तदियं कला परिजनहस्तगता क्रियताम्।

(ग) आर्य्य! यस्य कारणादियं कला शिक्ष्यते, स एव आर्य्येण शुश्रूषितपूर्वः शुश्रूषितव्यः।

(क) वसन्त इति। तत्तस्मात् ऋणमुक्तत्वात्, गच्छतु स्वगृहमिति शेषः। बन्धुजनो-ऽमात्यादिः, समाश्वसितु भवन्तमवलोक्य निरुद्वेगो भवतु। स बाहकं प्रति उक्तिरियम्।

(ख) स वा इति। यदि एवं दया चेत् कृतेत्यर्थः, तत् तदा इयं कला गात्र-संवाहनरूपा, परिजनस्य सवपोष्यजनीभूतस्य मम हस्तगता क्रियतां स्वगात्रसंवाहनाय मां भृत्यं कुरु इत्यर्थः।

(ग) वसन्त इति। शिक्ष्यते इति अतीतसामीप्ये वर्त्तमाना शिक्षितपूर्वेत्यर्थः। स एव चारुदत्त एव। पुनरपि चारुदत्तस्यैव किङ्करो भवेत्याशयः।

(च) মদনিকা। (বসন্তসেনার নিকট যাইয়া) আর্য্যে! সেই সভাধ্যক্ষ ও দ্যূতকর সন্তুষ্ট হইয়া গিয়াছে।

(ক) বসন্তসেনা। তা, আপনি যান, আজ আপনার বন্ধুজন আশ্বস্ত হউন।

(খ) সংবাহক। আর্য্যে! আপনি যদি এইরূপই করিলেন, তবে এই কলাবিদ্যাটী পরিজনের হস্তগত করুন (গাত্রসংবাহনের জন্য আমাকে ভৃত্য করুন।)

संवा। स्वगतम्। अज्जआए णिउणं पच्चादिट्ठोम्हि। कधं पच्चुवकलिश्शं ?। प्रकाशम्। अज्जए! अहं एदिणा जूदिअ-लावमाणेण शक्क-शमणके हुविश्शं। ता संवाहके जूदिअले शक्क-शमणके संवुत्तेति शुमलिदव्वा अज्जआए एदे अक्खलु। (घ)

वसन्त। अज्ज! अलं साहसेण। (ङ)

संवा। अज्जए! कले णिच्चए। इति परिक्रम्य। (च)

(घ) आर्य्यया निपुणं प्रत्यादिष्टोऽस्मि। कथं प्रत्युपकरिष्यं ?। आर्य्ये! अहमेतेन द्यूतकरापमानेन शाक्यश्रमणको भविष्यामि। तत् संवाहको द्यूतकरः शाक्य-श्रमणकः संवृत्त इति स्मर्त्तव्यानि आर्य्यया एतानि अक्षराणि।

(ङ) आर्य्य! अलं साहसेन।

(च) आर्य्ये! कृतो निश्चयः।

(घ) संवा इति। निपुणं सुकौशलं यथा स्यात्तथा, प्रत्यादिष्टोऽस्मि निराकृतोऽस्मि। कथं केन प्रकारेण। शाक्यश्रमणको बौद्धसन्न्यासी।

(ङ) वसन्त इति। साहसेन दुष्करसन्न्यासं प्रति प्रवृत्त्या।

(গ) বসন্তসেনা। ভদ্র! যাহার জন্য আপনি এই কলা শিক্ষা করিয়াছেন এবং পূর্ব্বে যাহার শুশ্রূষা করিয়াছেন, আপনি এখন তাঁহারই শুশ্রূষা করুন।

(ঘ) সংবাহক। (স্বগত) ইনি আমাকে নিপুণভাবে প্রত্যাখ্যান করিলেন। কিন্তু কি করিয়া আমি ইঁহার প্রত্যুপকার করি। (প্রকাশ্যে) আর্য্যে! দ্যূতকরদিগের এই অপমানে আমি বৌদ্ধসন্ন্যাসী হইব। তা' সংবাহকনামে দ্যূতকর বৌদ্ধসন্ন্যাসী হইয়াছে, আপনি এই কয়টী অক্ষর স্মরণ রাখিবেন।

(ঙ) বসন্তসেনা। ভদ্র! আপনি ও-সাহস করিবেন না।

(চ) সংবাহক। আর্য্যে! আমি স্থির করিয়াছি। (এই বলিয়া পরিক্রমণ করিয়া)

जूदेण तं कदं मे जं वीहत्थं जणश्श सव्वश्श ।
एण्हिं पाअड़शीशे णलिन्दमग्गेण विहलिश्शं ॥१७॥

नेपथ्ये कलकलः ।

संवा । आकर्ण्य । अले ! किं णेदं । आकाशे । किं भणाध ? "एशे क्खु वसन्तशेणाआए खुण्टमोड़के णाम दुट्टहत्थी विअ-लेदि" (१) त्ति । अहो ! अज्जआए गन्धगअं पेक्खिश्शं गदुअ । अहवा, किं मम एदिणा । जधा ववशिदं अणुचिट्ठिश्शं ।

इति निष्क्रान्तः । (क)

---

द्यूतेन तत् कृतं मे यद्विहस्तं जनस्य सर्वस्य ।
इदानीं प्रकटशीर्षो नरेन्द्रमार्गेण विहरिष्यामि ॥१७॥

(क) अरे ! किन्विदम् ? । किं भणत ? एष खलु वसन्तसेनायाः खुण्ट-मोडको नाम दुष्टहस्ती विकलयतीति । अहो ! आर्य्याया गन्धगजं प्रेक्षिष्ये गत्वा । अथवा, किं मम एतेन, यथा व्यवसितमनुष्ठास्यामि ।

---

द्यूतेनेति । सर्वस्य जनस्य समीपे, यत् विहस्तं व्याकुलं ह्रापितस्य तस्य दशसुवर्णस्य निमित्तं नितान्तापमानितमित्यर्थः, कृतवान् सभिक इति शेषः । तत् विहस्तत्वं मे द्यूतेनैव कृतम्, तत्प्रयोज्यत्वादिति भावः । इदानीं प्रकटं मुण्डितत्वात् प्रकाशितं शीर्षं मस्तकं यस्य स तादृशोऽहं नरेन्द्रमार्गेण राजपथेन विहरिष्यामि विचरिष्यामि, इति कृतो निश्चय इति पूर्वेणान्वयः । आर्य्या जातिः ॥१७॥

(क) संवा इति । खुण्टमोड़क इति डित्थादिवत् रूढः शब्दः । विकलयति

---

সকল লোকের নিকটে সভাধ্যক্ষ যে আমাকে ব্যাকুল করিয়াছিল, তাহা দ্যূতেই করিয়াছে । এখন আমি প্রকাশিতমস্তক হইয়া রাজপথে বিচরণ করিব ॥১৭॥

নেপথ্যে কোলাহল ।

---

(१) विहलेदि ।

शर्वि। ननु! अतिसाहसमेतत्। (ञ)

मद। अज्ज! उवणेहि। अस्सधा अदिसाहसं। (ट)

वसन्त। साहु, मदणिए! साहु। अभुजिस्साए विअ मन्तिदं। (ठ)

(ञ) त्वं तावदचौरः, सोऽपि आर्य्यः अनृणः, आर्य्यायाः स्वकः अलङ्कारक उपगतो भवति।

(ट) अयि! उपनय। अन्यथा अतिसाहसम्।

(ठ) साधु, मदनिके! साधु। अभुजिष्ययैव मन्त्रितम्।

---

(ञ) मद इति। सोऽपि आर्य्यः चारुदत्तः, अनृणः, न्यासस्य येन केनापि प्रकारेण पुनः स्वामिनीहस्त एव प्रत्यर्पणादिति भावः। स्वकः स्वकीयः। उपगतः प्राप्तः।

(ञ) शर्वि इति। नन्विति सम्बोधने। "प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु" इत्यमरः। एतत्—तत्प्रकारेण वसन्तसेनायाः समर्पणम्, अतिसाहसं गुरुतरमनोबल-कार्य्यम्, सर्वेषामेव मिथ्याव्यापाराणां प्रतिपादनप्रवृत्तेरिति भावः। तेनैतदपि न पारयामीति व्यज्यते।

(ट) मद इति। उपनय वसन्तसेनायाः समीपे एतमलङ्कारमिति शेषः। अन्यथा तस्याप्यकरणे, अतिसाहसं गुरुतरसाहसकार्य्यं स्यादिति शेषः ; उभाभ्यामेव चारुदत्त-वसन्तसेनाभ्यां राजद्वारे तवाभियोगसम्भवादिति भावः।

(ठ) वसन्त इति। अभुजिष्ययैव अदास्येव, मन्त्रितमुक्तं युक्तिर्दत्तेत्यर्थः। प्रायेण बर्बररूपाया दास्या एव युक्तं दातुमशक्यत्वादित्याशयः।

---

(ঞ) মদনিকা। তুমি চোর হইলে না, চারুদত্তও অনৃণী হই-লেন, বসন্তসেনাও নিজের অলঙ্কার পাইলেন।

(ঞ) শর্বিলক। ওহে! এটা গুরুতর সাহসের কাজ।

(ট) মদনিকা। ওহে! বসন্তসেনার নিকটেই লইয়া যাও, না হইলেই গুরুতর সাহসের কাজ হইবে।

शर्वि। मयाप्ता महती बुद्धिर्भवतीमनुगच्छता।
निशायां नष्टचन्द्रायां दुर्लभो मार्गदर्शकः ॥२१॥

मद। तेण हि तुमं इमस्सिं कामदेवगेहे मुहुत्तअं चिट्ठ, जाव अज्जआए तुह आगमणं णिवेदेमि। (ड)

शर्वि। एवं भवतु।

मद। उपसृत्य। अज्जए! एसो क्खु चारुदत्तस्स सआसादो वम्हणो आअदो। (ढ)

(ड) तेन हि त्वमस्मिन् कामदेवगेहे मुहूर्त्तकं तिष्ठ, यावदार्य्यायै तवागमनं निवेदयामि।

(ढ) आर्य्ये! एष खलु चारुदत्तस्य सकाशात् ब्राह्मणः आगतः।

मयेति। भवतीं त्वाम्, अनुगच्छता कर्त्तव्यबोधाय अनुसरता मया, महती बुद्धिः आप्ता प्राप्ता। तथा च नष्टः अस्तमितत्वाददर्शनं गतश्चन्द्रो यस्या तस्यामन्धकाराच्छन्नाया-मित्यर्थः, निशायाम्, मार्गदर्शकः पथिभ्रमाकुलस्य गन्तव्यपथप्रदर्शको जनो दुर्लभः। तथाहि अन्धकाराच्छन्नाया निशाया पथिभ्रान्तस्य गन्तव्यपथप्रदर्शक इव कर्त्तव्यमूढस्य ममेदानीं कर्त्तव्यमुपदिशन्ती त्वं परमबन्धुरसीत्यभिप्रायः।

अत्र सामान्येन विशेषसमर्थनादर्थान्तरन्यासोऽलङ्कारः ॥२१॥

(ঠ) বসন্তসেনা। সাধু, মদনিকা! সাধু, তুমি অদাসীব ন্যায় বলিয়াছ।

শর্ব্বিলক। তোমার অনুসরণ করিয়া আমি গুরুতর বুদ্ধি লাভ করিলাম। চন্দ্র অস্তমিত হইলে রাত্রিতে পথ-প্রদর্শক লোক দুর্লভ ॥২১॥

(ড) মদনিকা। তা হইলে, আমি আর্য্যা বসন্তসেনার নিকট যে পর্য্যন্ত তোমার আগমন নিবেদন করি, সে পর্য্যন্ত তুমি এই কামদেবগৃহে একটু কাল থাক।

শর্ব্বিলক। এইরূপই হউক।

वसन्त। हञ्जे! केरम्रं त्ति कधं तुमं जाणासि?। (ण)

मद। अज्जए! अत्तकेरम्रं पि ण जाणामि?। (त)

वसन्त। स्वगतं सशिरःकम्पं विहस्य। जुज्जदि प्रकाशम्। पविसदु। (थ)

मद। जं अज्जआ आणवेदि। उपगम्य। पविसदु सव्विलओ। (द)

(ण) हञ्जे। (तस्य) सम्बन्धीति कथं त्वं जानासि?।

(त) आर्य्ये। आत्मसम्बन्धिनमपि न जानामि?।

(थ) युज्यते। प्रविशतु।

(द) यदार्य्या आज्ञापयति। प्रविशतु शर्विलकः।

---

(ण) वसन्त इति। सम्बन्धी चारुदत्तसम्पर्कवान्।

(त) मद इति। आत्मसम्बन्धिनमपि आत्मीयमपि। भवत्याः प्रियतमसम्बन्धित्वेन भवत्या आत्मसम्बन्धित्वात् भवद्दास्या ममापि आत्मसम्बन्धित्वमस्तिन्निति भावः।

(थ) वसन्त इति। शिरःकम्पेन अनुमोदनसूचकमस्तककम्पनेन सहेति सशिरःकम्पम्। युज्यते अस्मिन् जने तवात्मसम्बन्धित्वमिति शेषः, आत्मन एव प्रियतमत्वादिति भावः। पूर्वं मदनिकया वसन्तसेनायाः प्रियतमसम्बन्धित्वेनात्मसम्बन्धित्वमुक्तम्, इदानीं वसन्तसेनया तु तत्प्रियतमत्वं नैव तदात्मसम्बन्धित्वं प्रतिपादितमिति बोध्यम्।

---

(ঢ) মদনিকা। (বসন্তসেনার নিকট উপস্থিত হইয়া) আর্য্যে! চারুদত্তের নিকট হইতে এই একটী ব্রাহ্মণ আসিয়াছেন।

(ণ) বসন্তসেনা। ওলো! চারুদত্তের ইহা তুমি কি করিয়া জানিলে?।

(ত) মদনিকা। আর্য্যে। নিজের লোককেও জানি না?।

(থ) বসন্তসেনা। (মস্তককম্পনের সহিত হাস্য করিয়া স্বগত) সঙ্গত বটে। (প্রকাশ্যে) প্রবেশ করুন।

शर्वि। उपसृत्य सवैलक्ष्यम्। स्वस्ति भवत्यै। (ध)

वसन्त। अज्ज! वन्दामि। उवविसदु अज्जो। (न)

शर्वि। सार्थवाहस्त्वां विज्ञापयति—जर्जरत्वाद्गृहस्य दूरक्ष्यमिदं भाण्डम्, तद्गृह्यताम्। इति मदनिकायाः समर्प्य प्रस्थितः। (प)

(न) आर्य्ये। वन्दे। उपविशतु आर्य्यः।

---

अतएवोक्तमदनिकावाक्यं दर्पणोक्तचतुर्थपताकास्थानम्। तथा च साहित्यदर्पणे—

"द्व्यर्थो वचनविन्यासः सुश्लिष्टः काव्ययोजितः।
प्रधानार्थान्तराक्षेपी पताकास्थानकं परम्॥"

अत्र च मदनिकाशर्व्विलकपरिणयरूपप्रधानार्थान्तराक्षेप उन्नेयः, परिणीतत्वं नैव शर्व्विलकस्य मदनिकाया आत्मसम्बन्धित्वसम्भवात्।

(ध) शर्वि इति। वैलक्ष्येण लज्जासङ्कोचेन सहेति सवैलक्ष्यम्। लज्जासङ्कोचस्तु आत्मनश्चौरत्वादिति बोध्यम्। भवत्यै स्वस्ति मङ्गलं भवत्विति शेषः।

"स्वस्त्याशीः क्षेमपुण्यादौ" इत्यमरः। भवत्यै इति "नमःस्वस्ति—" इत्यादिना चतुर्थी।

(प) शर्वि इति। सार्थवाहो वणिक्, स च प्रकरणाच्चारुदत्तः। अत्र निरुपपदसार्थवाहशब्दप्रयोगात् चारुदत्तेन सहात्मनः सखित्वेन समानस्थानवर्त्तित्वं सूचितम्, न पुनरनुचरत्वमित्यवधेयम्। गृहस्य जर्जरत्वात् पुरातनतया जीर्णत्वात्, इदं भाण्डं सुवर्णभूषणम्, दुःखेन रक्ष्यत इति दूरक्ष्यं सर्व्वदा सतर्कभावेन रक्षणीयतया कार्य्यान्तरव्यापृतानामस्माकं क्लेशेन रक्षणीयमित्यर्थः। स्वामिन्या वसनभूषणादिकं दास्येव रक्षतीति

---

(দ) মদনিকা। আর্য্যা যাহা আদেশ করেন। ( নিকটে যাইয়া ) শর্ব্বিলক প্রবেশ করুন।

(ধ) শর্ব্বিলক। ( নিকটে উপস্থিত হইয়া সলজ্জভাবে ) আপনার মঙ্গল হউক।

(ন) বসন্তসেনা। আর্য্য! প্রণাম করি। আপনি উপবেশন করুন।

वसन्त। अज्ज! ममावि दाव पड़िसन्देसं तहिं अज्जो णेदु। (फ)

शर्वि। स्वगतम्। कस्तत्र यास्यति? प्रकाशम्। कः प्रतिसन्देशः?। (ब)

वसन्त। पड़िच्छदु अज्जो मदणिअं। (भ)

(फ) आर्य्य! ममापि तावत् प्रतिसन्देशं तत्रार्य्यो नयतु।

(भ) प्रतीच्छतु आर्य्यो मदनिकाम्।

---

मदनिकायाः समीपे समर्पणम्। तेन च वसन्तसेनाया धनित्वगौरवातिशयौ दर्शित इति बोध्यम्। प्रस्थितः प्रस्थातुमुद्यतः।

(फ) वसन्त इति। आर्य्यो भवान्। तस्मिन् चारुदत्तसमीपे। प्रतिसन्देशं प्रतिवाचिकम्।

(ब) शर्वि इति। कस्तत्र यास्यति? कोऽपि नेत्यर्थः; लज्जावशादनावश्यकत्वाच्चेति भावः।

(भ) वसन्त इति। प्रतीच्छतु गृह्णातु। अयञ्च प्रतिग्रहवृत्तान्तस्तस्मै वक्तव्यः, स एव च मे प्रतिसन्देश इति भावः।

---

(प) शर्ব্বিলক। বণিক্ ( চারুদত্ত ) আপনাকে জানাইতেছেন—"আমার বাড়ী জীর্ণ বলিয়া, এই অলঙ্কার রক্ষা করা কষ্ট, তা' গ্রহণ করুন।" ( এই বলিয়া মদনিকার হস্তে অলঙ্কার অর্পণ করিয়া প্রস্থান করিবার উদ্যোগ করিল। )

(ফ) বসন্তসেনা। আর্য্য। আপনি সেখানে আমারও প্রত্যুত্তর নিয়া যা'ন।

(ব) শর্ব্বিলক। ( স্বগত ) কে সেখানে যাইবে?। ( প্রকাশ্যে ) কি প্রত্যুত্তর?।

(ভ) বসন্তসেনা। আপনি মদনিকাকে গ্রহণ করুন।

শৰ্ব্বি। ভবতি! ন খল্ববগচ্ছামি। (ম)

বসন্ত। অহং অবগচ্ছামি। (য)

শৰ্ব্বি। কথমিব?।

বসন্ত। অহং অজ্জচারুদত্তেণ ভণিদা—"জো ইমং অলঙ্কারঅং সমপ্পইস্সদি, তস্স তুএ মদণিআ দাদব্বা।" তা সো জ্জেব এদং দে দেদিত্তি এব্বং অজ্জেণ অবগচ্ছিদব্বং। (র)

শৰ্ব্বি। স্বগতম্। অয়ে! বিজ্ঞাতোঽহমনয়া। প্রকাশম্। সাধু, আর্য্যচারুদত্ত! সাধু। (ল)

(য) অহমবগচ্ছামি।

(র) অহমার্য্যচারুদত্তেন ভণিতা—"য ইমমলঙ্কারকং সমর্পয়িষ্যতি, তস্য ত্বয়া মদনিকা দাতব্যা"। তত্ স এব এতাং তে দদাতীতি। এবমার্য্যেণ অবগন্তব্যম্।

(ম) শৰ্ব্বি ইতি। ন খল্ববগচ্ছামি ভবত্যা বাক্যার্থমিতি শেষঃ। প্রার্থনায়ামকৃতায়ামপি অপ্রাসঙ্গিকত্বাত্ দানপ্রস্তাবো মা বিস্ময়য়তীতি ভাবঃ।

(য) বসন্ত ইতি। সোল্লুণ্ঠনোক্তিরিয়ম্।

(র) বসন্ত ইতি। এতাং মদনিকাম্। আর্য্যেণ ভবতা।

(ল) শৰ্ব্বি ইতি। বিজ্ঞাতো মদনিকাপ্রার্থিত্বেনাবগতঃ। কথমন্যথা ঈদৃশমসম্ভবমুপন্যস্যেদিত্যাশয়ঃ।

(ম) শর্ব্বিলক। আমি আপনার কথার অর্থ বুঝিতেছি না।

(য) বসন্তসেনা। আমি বুঝিতেছি।

শর্ব্বিলক। কি রকম?।

(র) বসন্তসেনা। আর্য্য চারুদত্ত আমাকে বলিয়াছেন যে—"এই অলঙ্কার যে নিয়া দিবে, তাহার হস্তে তুমি মদনিকাকে দান করিবে।" তা' তিনিই ইহাকে দান করিতেছেন, ইহা আপনি জানিবেন।

गुणेष्वेव हि कर्त्तव्यः प्रयत्नः पुरुषैः सदा ।
गुणयुक्तो दरिद्रोऽपि नेश्वरैरगुणैः समः ॥२२॥

अपि च ।

गुणेषु यत्नः पुरुषेण कार्य्यो न किञ्चिदप्राप्यतमं गुणानाम् ।
गुणप्रकर्षादुडुपेन शम्भोरलङ्घ्यमुल्लङ्घितमुत्तमाङ्गम् ॥२३॥

गुणेष्विति । पुरुषैः सदा गुणेष्वेव हि दयौदार्य्यादिगुणार्जनेष्वेव, प्रयत्नः कर्त्तव्यः ; न पुनर्धनार्जनादिष्विति भावः । कुत इत्याह—गुणयुक्तो दरिद्रोऽपि जनः, अगुणैर्दयौदार्य्यादिगुणविहीनैः ईश्वरैर्धनिभिः, न समस्तुल्यः, अपि तु अधिक एवेत्यर्थः, निर्गुणधनिभिर्जगति साधारणप्रयोजनाभावादिति भावः ।

अत्र गुणयुक्तदरिद्रसामान्यात् चारुदत्तरूपगुणयुक्तदरिद्रविशेषप्रतीतेरप्रस्तुतप्रशंसालङ्कारः, परार्द्धार्थरूपकारणेन पूर्वार्द्धार्थरूपकार्य्यस्य समर्थनादर्थान्तरन्यासश्च ; अनयोरङ्गाङ्गिभावेन सङ्करः । "यः कौमारहरः स एव हि वरः—" इत्यादिवत् 'एव-हि' शब्दद्वयमेव अत्यन्तनियमं सूचयतीति न हिशब्दोपादानान्निरर्थकत्वदोषः ॥२२॥

उक्तप्रायमेवार्थं किञ्चिद्विशेषप्रतिपादनाय पुनराह गुणेष्विति । पुरुषेण गुणेषु दयौदार्य्यादिगुणार्जनेषु, यत्नः कार्य्यः कर्त्तव्यः । कथमेतदित्याह—गुणानां सताम्, किञ्चिदपि वस्तु, न अप्राप्यतमम् अपि तु सर्वमेव प्राप्यमित्यर्थः । कुत इष्टमेतदित्याह—उडुपेन नक्षत्रपतिना चन्द्रेण, गुणप्रकर्षात् आत्मनः सौन्दर्य्यशीतलत्वादिगुणातिरेकात्, अलङ्घ्यम् अन्यैर्लङ्घयितुमारोढुमशक्यमपि, शम्भोर्महादेवस्य उत्तमाङ्गं मस्तकम्, उल्लङ्घितमारूढम् ।

अत्रापि प्रथमचरणार्थरूपकार्य्यस्य द्वितीयचरणार्थरूपकारणेन समर्थनादेकोऽर्थान्तर-

---

(ল) শর্বিলক । (স্বগত) ও ! ইনি আমাকে জানিয়াছেন । (প্রকাশ্যে) সাধু, আর্য্য চারুদত্ত ! সাধু ।

মানুষ, গুণোপার্জ্জন করিবার জন্য সর্ব্বদা চেষ্টা করিবে । কারণ, গুণবান্ দরিদ্রও, নির্গুণ ধনীদিগের সমান নহে ॥২২॥

আরও, মানুষ, গুণোপার্জ্জন করিবার জন্য চেষ্টা করিবে । কারণ,

वसन्त । को एत्थ पवहणिओ । [व]

प्रविश्य सप्रवहणश्चेटः । अज्जए ! सज्जं पवहणं । [श]

वसन्त । हञ्जे मदणिए ! सुदिट्ठं मं करेहि । दिस्सासि । आरुह पवहणं । सुमरेसि मं । [ष]

(व) कोऽत्र प्रवहणिकः ? ।

(श) आर्य्ये ! सज्जं प्रवहणम् ।

(ष) हञ्जे मदनिके ! सुदृष्टां मा कुरु । द्रक्ष्यामि । आरोह प्रवहणम् । स्मरसि माम् ।

---

न्यासः, द्वितीयचरणार्थरूपसामान्यस्य द्वितीयार्द्धार्थरूपविशेषेण समर्थनादपरोऽर्थान्तरन्यासश्च, अनयोरपि पूर्व्ववत् सङ्करः ।

अनयोः पुष्पं नाम प्रतिमुखमन्ध्यङ्गम्, "पुष्पं विशेषवचनं मतम्" इति साहित्यदर्पणलक्षणात् ।

"नक्षत्रमृक्षं भं तारा तारकाऽप्युडु वा स्त्रियाम्" "उत्तमाङ्गं शिरः शीर्षं मूर्द्धा ना मस्तकोऽस्त्रियाम्" इति च अमरः ।

उपेन्द्रवज्रा वृत्तम् ॥२२॥

(श) प्रविश्येति । प्रोह्यते भारोऽनेनेति प्रवहणं गोशकटं तेन सहेति सप्रवहणः यद्वा प्रवहणं सज्जीकृत्येत्यर्थः, चेटो गोशकटचालयिता दासः । सज्जं प्रस्तुतम् ।

(ष) वसन्त इति । सुदृष्टां प्रफुल्लचित्ततया शोभनदृष्टिविषयीभूताम् । यत् इतः परं न कथमपि ते दृष्टिविषयीभविष्यामीति भावः । द्रक्ष्यामि शर्व्विलकायेति शेषः ।

---

গুণের অপ্রাপ্য কিছুই নাই। চন্দ্র, গুণাধিক্যবশতই অন্যের অলঙ্ঘনীয় মহাদেবের মস্তক লঙ্ঘন করিয়াছেন ॥২৩॥

(ব) বসন্তসেনা। এখানে গোশকটচালক কে আছ ?।

(শ) (গোশকটের সহিত প্রবেশ করিয়া) ভৃত্য। আর্য্যে ! শকট প্রস্তুত।

मद। रुदती। परिच्चत्तम्हि अज्जआए। इति पादयोः पतति। (स)

वसन्त। सम्पदं तुमं ज्जेव वन्दणीआ संवुत्ता। ता गच्छ, आरुह पवहणं। सुमरेसि मं। (ह)

शर्वि। स्वस्ति भवत्यै। मदनिके!

सुदृष्टः क्रियतामेष शिरसा वन्द्यतां जनः।
यत्र ते दुर्लभं प्राप्तं वधूशब्दावगुण्ठनम् ॥२४॥

(स) परित्यक्तास्मि आर्य्यया।

(ह) साम्प्रतं त्वमेव वन्दनीया संवृत्ता। तद्गच्छ, आरोह प्रवहणम्। स्मरसि माम्।

एतेन मदनिका वसन्तसेनायाः क्रीतदासी आसीदिति प्रतीयते। स्मरसीति भविष्यत्-सामीप्ये वर्त्तमाना ; स्मरिष्यसीत्यर्थः।

(स) मद इति। पादयोः पतति, प्रस्थानकालीनवन्दनार्थमित्याशयः।

(ह) वसन्त इति। त्वं वन्दनीया, ब्राह्मणपरिगृहीतत्वादित्यभिप्रायः।

सुदृष्ट इति। एष वसन्तसेनारूपी जनः, सुदृष्टः प्रीतिप्रफुल्लनेत्रेण शुभनिरीक्षितः क्रियताम्, एवं शिरसा वन्द्यतां प्रस्थानकालिनी नमस्कारः क्रियताम्। यत्र जने अनुग्रहेण त्वामिवं ददाने सतीत्यर्थः, दुर्लभं साधारणस्त्रिया प्रायेण लब्धुमशक्यम्, वधूशब्द एव अवगुण्ठनं सकामपुरुषान्तरदृष्टिनिवारकत्वादावरणम्, ते तव उपरि, प्राप्तमुपस्थितम्। यः खल्वेवमुपकरोति, कस्तं न सुदृष्टं शिरसा वन्दितञ्च करोतीति भावः।

(স) বসন্তসেনা। মদনিকা। আমার প্রতি শুভদৃষ্টি কর। তুমি প্রদত্ত হইলে। এখন গাড়ীতে উঠ। আমাকে স্মরণ করিও।

(স) মদনিকা। (কাঁদিতে কাঁদিতে) আপনি আমাকে পরিত্যাগ করিলেন। (এই বলিয়া পায়ের উপর পড়িল।)

(হ) বসন্তসেনা। এখন তুমিই বন্দনীয় হইয়াছ। তা যাও, গাড়ীতে উঠ। আমাকে স্মরণ করিও।

শর্বিলক। আপনার মঙ্গল হউক। মদনিকা!।

इति मदनिकया सह प्रवहणमारुह्य गन्तुं प्रवृत्तः ।

नेपथ्ये । कः कोऽत्र भोः ! । राष्ट्रियः समाज्ञापयति—"एष खलु आर्य्यको गोपालदारको राजा भविष्यती"ति सिद्धादेशप्रत्ययपरित्रस्तेन पालकेन राज्ञा घोषादानीय घोरे बन्धनागारे बद्धः । ततः स्वेषु स्वेषु स्थानेषु अप्रमत्तैर्भवद्भिर्भवितव्यम् । (च)

अत्र पूर्वार्द्धं प्रति परार्द्धवाक्यार्थस्य हेतुतया वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः निरङ्गं केवलरूपकञ्च, अनयोरङ्गाङ्गिभावेन सङ्करः । तथा 'ददाति' इत्येवं यत्किञ्चित्-पदस्य अनुक्ततया न्यूनपदत्वदोषः ; स च 'यस्मात्ते दुर्लभं प्राप्तम्' इति पाठेन समाधेयः ॥२४॥

(च) नेपथ्य इति । राष्ट्रियो राष्ट्रपाल उपरितनरक्षिपुरुषः । आर्य्यकः सज्जनः । संज्ञायां कप्रत्ययः । "महाकुलकुलीनार्य्यसभ्यसज्जनसाधवः" इत्यमरः । गोपालदारको गोपपुत्रः । सिद्धादेशे सिद्धपुरुषवाक्ये यः प्रत्ययो विश्वासस्तेन परित्रस्तो नितान्तभीतस्तेन, पालकेन पालकनाम्ना । घोषात् आभीरपल्लीतः । "घोष आभीरपल्ली स्यात्" इत्यमरः । भवद्भिरधस्तनरक्षिपुरुषैः, अप्रमत्तैः सावधानैः । यथायमार्य्यको नापसर्त्तुमर्हतीति भावः ।

अयञ्च सन्दर्भश्चूलिका नाम अर्थोपक्षेपकः । यथा साहित्यदर्पणे—

"अन्तर्जवनिकासंस्थैः सूचनार्थस्य चूलिका ।"

---

এই ব্যক্তির প্রতি শুভদৃষ্টি কর এবং মস্তকদ্বারা ইঁহাকে প্রণাম কর। যিনি অনুগ্রহ করিয়া দান করিলে, তুমি দুর্লভ বধূশব্দের আবরণ পাইয়াছ ॥২৪॥

( এই বলিয়া মদনিকার সহিত গাড়ীতে উঠিয়া যাইতে লাগিল )

(ক্ষ) নেপথ্যে। এখানে কে কে আছ হে। রক্ষিসেনাপতি আদেশ করিতেছেন—"আর্য্যকনামে এই গোপবালক রাজা হইবে" কোন সিদ্ধপুরুষের এইরূপবাক্যে বিশ্বাসবশতঃ ভীত হইয়া, রাজা পালক, গোপপল্লী হইতে তাহাকে আনিয়া ভয়ঙ্কর কারাগারে আবদ্ধ করিয়াছেন। সুতরাং তোমরা স্ব স্ব স্থানে সাবধান হইয়া থাকিবে।

शर्वि । आकर्ण्य । कथं राज्ञा पालकेन प्रियसुहृदार्य्यको मे बद्धः । कलत्रवांश्चास्मि संवृत्तः । आः, कष्टम् । अथवा—(क)

इयमिदमतीव लोके प्रियं नराणां सुहृच्च वनिता च ।
सम्प्रति तु सुन्दरीणां शतादपि सुहृद्विशिष्टतमः ॥२५॥

भवतु, अवतरामि । इत्यवतरति ।

तत्राव विरोधो नाम प्रतिमुखसन्धेरङ्गम्, "विरोधो व्यसनप्राप्तिः" इति तदीयलक्षणात् ।

(क) शर्वि इति । कलत्रवान् सद्यःपरिगृहीतस्त्रीसङ्गिकः । उभयोरेवावश्यरक्षणीयतया कं परित्यज्य कं रक्षितुं यामीत्यतः कष्टमित्याशयः ।

अत्र तापनं नाम प्रतिमुखसन्धेरङ्गम् । यथा साहित्यदर्पणे—

"उपायदर्शनं यत्तु तापनं नाम तद्भवेत् ।"

इयमिति । सुहृच्च वनिता च इदं इयं वस्तुयुगलम्, लोके नराणामतीव प्रियम्, तु किन्तु, सम्प्रति कारायां बन्धनकाले, सुन्दरीणां वनितानां शतादपि, सुहृद्विशिष्टतमः पर्य्यवेक्षणीयत्वे उत्कृष्टतमः । तथा च स्वस्था वनितामुपेक्ष्यापि विपन्नः सुहृत् सर्वथैवेदानीं मया पर्य्यवेक्षणीय इति भावः ।

अत्र पूर्वार्द्धे प्रस्तुतयोरेव सुहृद्वनितयोः प्रियत्वरूपैकगुणसम्बन्धात् तुल्ययोगिता, परार्द्धे च वनितापेक्षया सुहृद आधिक्यवर्णनात् व्यतिरेकः ; अनयोर्मिथो निरपेक्षतया संसृष्टिः । तथा वनितेति प्रक्रम्य सुन्दरीणामित्यभिधानात् प्रकृतिविषयो भग्नप्रक्रमतादोषः, स तु 'सम्प्रति तु हन्त तासाम्' इति पाठेन परिहार्य्यः ।

आर्य्या जातिः ॥२५॥

---

(क) শর্বিলক। (শুনিয়া) কি রাজা পালক, আমার প্রিয়সুহৃৎ আর্য্যককে আবদ্ধ করিয়াছেন।। হায় কি কষ্ট!। অথবা—

জগতে, সুহৃৎ ও ভার্য্যা এই দুইটী বস্তুই, মানুষের অত্যন্ত প্রিয়। কিন্তু এখন শত সুন্দরী ভার্য্যা হইতেও সুহৃৎ অত্যন্ত অধিক।২৫॥

হউক, আমি অবতরণ করি। (এই বলিয়া গাড়ী হইতে নামিল।)

मद। साम्रमञ्जलिं बद्ध्वा। एव्वं णेदं। ता परं णेदु मं अज्जउत्तो समीवं गुरुअणाणं। (ख)

शर्वि। साधु, प्रिये! साधु। अस्मच्चित्तसदृशमभिहितम्। चेटमुद्दिश्य। भद्र! जानीषे रेभिलस्य सार्थवाहस्य उदवसितम्? (ग)

चेटः। अध इं। (घ)

शर्वि। तत्र प्रापय प्रियाम्।

चेटः। जं अज्जो आणवेदि। (ङ)

(ख) एवमेतत्। तत्परं नयतु मामार्य्यपुत्रः समीपं गुरुजनानाम्।

(घ) अथकिम्।

(ङ) यदार्य्य आज्ञापयति।

---

(ख) मद इति। एवमेतत् त्वया यदुक्तं तत् सत्यमेवेत्यर्थः। तत् तस्मात्, परम् अपरम्, गुरुजनानां समीपम्। वसन्तसेनाया दास्यान्मुक्ततया पुनस्तद्गमनं नोचितमिति भावः।

(ग) शर्वि इति। अस्माकं चित्तसदृशं चित्तवृत्त्यनुरूपम्। मयापीदानीमेतदेव चिन्तितमित्याशयः। रेभिलस्य तदाख्यस्य, सार्थवाहस्य वणिजः, उदवसितं गृहम्, जानीषे परिचिनोषि किमिति काकुः।

---

(খ) মদনিকা। ( অঞ্জলি বন্ধন করিয়া, অশ্রুপাতের সহিত ) ইহা এইরূপ বটে। তবে আমাকে অন্য গুরুজনের নিকট নিন্।

(গ) শর্ব্বিলক। ভাল, প্রিয়ে! ভাল। তুমি আমার অভিপ্রায়ের অনুরূপই বলিয়াছ। ( শকটচালকের প্রতি ) ভদ্র! তুমি রেভিল-নামক বণিকের বাড়ী চেন?।

(ঘ) শকটচালক। হাঁ।

শর্ব্বিলক। সেইখানে প্রিয়াকে লইয়া যাও।

(ঙ) শকটচালক। আপনি যাহা আদেশ করেন।

मद। जधा अज्जउत्तो भणादि। अप्पमत्तेण दाव अज्ज-उत्तेण होदव्वं। इति निष्क्रान्ता। (च)

शर्वि। अहमिदानीम्—

ज्ञातीन् विटान् स्वभुजविक्रमलब्धवर्णान्
राजापमानकुपितांश्च नरेन्द्रभृत्यान्।
उत्तेजयामि सुहृदः परिमोक्षणाय
यौगन्धरायण इवोदयनस्य राज्ञः ॥२६॥

(च) यथा आर्य्यपुत्रो भणति, अप्रमत्तेन तावदार्य्यपुत्रेण भवितव्यम्।

(च) मद इति। यथा आर्य्यपुत्रो भणति, तथात्वं इति शेषः। अप्रमत्तेन आत्मरक्षाया सावधानेन। अन्यथा राज्ञो विरोधित्वेन विपदाशङ्केति भावः।

ज्ञातीनिति। उदयनस्य राज्ञो वत्सराजस्य परिमोक्षणाय, यौगन्धरायणस्तदाख्यस्तदीय मन्त्रीव, अहमिदानीम्, सुहृदो मित्रस्य आर्य्यकस्य, परिमोक्षणाय, ज्ञातीन् राज्ञो दायादान्, विटान् "विटस्तु धूर्त्तः" इत्यादिदर्पणादिलक्षितान् सुचतुरान् जनान्, स्वभुजविक्रमे आत्मबाहुबलप्रकाशे लब्धवर्णा विचक्षणा वीरा इत्यर्थस्तान्, तथा राजापमानेन राजकर्त्तृ-कापमानेन कुपितान् नरेन्द्रभृत्यान् तस्यैव राज्ञः अमात्यांश्च, उत्तेजयामि राज्ञो विरुद्धत्वे उत्साहयामि। तथा सति राज्ञो ध्वंसेन बन्धोरार्य्यकस्य मुक्तिर्भविष्यतीति भावः।

अत्र उत्तेजयामीत्येकया क्रियया अप्रस्तुतानामेव ज्ञात्यादीना कर्म्मतया अभिसम्बन्धात्

(চ) মদনিকা। আর্য্যপুত্র। আপনি যেরূপ বলিলেন, তাহাতে আপনি সর্ব্বদাই সাবধান হইবেন। (ইহার পর চলিয়া গেল।)

শর্ব্বিলক। পূর্ব্বে বৎসরাজ উদয়নের মুক্তির নিমিত্ত, তদীয় মন্ত্রী যৌগন্ধরায়ণের ন্যায় আমি এখন বন্ধু আর্য্যকের মুক্তির জন্য, রাজা পালকের জ্ঞাতিবর্গকে, চতুর লোকসকলকে, আত্ম-বাহু-বলপ্রকাশে বিচক্ষণ বীরগণকে এবং রাজকর্ত্তৃক অপমানবশতঃ ক্রুদ্ধ রাজকর্ম্মচারীদিগকে (রাজার বিরুদ্ধে) উত্তেজিত করিব ॥২৬॥

अपि च। प्रियसुहृदमकारणे गृहीतं
रिपुभिरसाधुभिराहितात्मशङ्कैः।
सरभसमभिपत्य मोचयामि
स्थितमिव राहुमुखे शशाङ्कबिम्बम् ॥२७॥

इति निष्क्रान्तः।

तुल्ययोगितालङ्कारः श्रौती उपमा च; अनयोर्गुणप्रधानभावेनाङ्गाङ्गिभावात् सङ्करः। तथा राजेति प्रक्रम्य नरेन्द्रेत्यभिधानात् प्रकृतिविषयो भग्नप्रक्रमतादोषः, एवं यौगन्धरायण उत्तं जयामास अहन्तु उत्तं जयामीति पुरुषभेदात् कालभेदाच्च अपरोऽपि भग्नप्रक्रमतादोषः; किन्तु 'नरेन्द्रभृत्यान्' इत्यत्र 'तदीयभृत्यान्' इति पाठे 'उत्तं जयन् हि फलवान् सुहृदो विमुक्त्यै' इति पाठे च तन्निरासः। न च तथात्वेऽपि यौगन्धरायणः फलवानभवत् अहन्तु फलवान् भविष्यामीति पुनः पुरुषभेदात् कालभेदाच्च भग्नप्रक्रमतायास्तादवस्थ्यमेव; प्रत्युत न्यूनपदतादोषश्चेति वाच्यम्, अनभिहितपदवैषम्ये भग्नप्रक्रमताया अनुपपत्तेः भवत्यादीनामध्याहारे न्यूनपदताया वामनादिभिरनङ्गीकृतत्वाच्च।

चन्द्रसेनो नाम उज्जयिनीराजो वत्सराजमुदयनं केनापि कारणेन कारागारे बद्धवान्। वत्सराजमन्त्री यौगन्धरायणस्तु चन्द्रसेनस्य ज्ञात्यादीनुत्तेज्य वत्सराजमुद्धारयामासेति कथासरित्सागरोपाख्यानमत्र द्रष्टव्यम्।

"लब्धवर्णो विचक्षणः" इत्यमरः। वसन्ततिलका वृत्तम् ॥२६॥

प्रियेति। आहिता धृता आत्मशङ्का आर्य्यकादात्मविपदातङ्को यैस्तैः, असाधुभिः रिपुभिः पालकादिभिः, कारणस्याभावः अकारणं तस्मिन् सत्यपि, गृहीतं कारायामाबद्धम्, अतएव राहुमुखे शशाङ्कबिम्बमिव तत्र च स्थितम्, प्रियसुहृदमार्य्यकम्, सरभस सवेगम्, अभिपत्य उपस्थाय मोचयामि।

अत्र श्रौती समासगतोपमालङ्कारः। अध्यवसायो नाम नाट्यालङ्कारश्च; "प्रतिज्ञाध्यवसायकः" इति दर्पणलक्षणात्।

"रभसो वेगहर्षयोः" इति विश्वः। पुष्पिताग्रा वृत्तम् ॥२७॥

---

আরও, আশঙ্কিত দুরাত্মা শত্রুগণ, প্রিয়সুহৃৎ আর্য্যককে অকারণে

प्रविश्य चेटी। अज्जए! दिट्ठिआ वड्ढसि। अज्जचारुदत्तस्स सआसादो बम्हणो आअदो। (छ)

वसन्त। अहो! रमणीअदा अज्ज दिवसस्स। ता हञ्जे! सादरं बन्धुलेण समं पवेसेहि णं। (ज)

चेटी। जं अज्जआ आणवेदि। इति निष्क्रान्ता। (झ)

(छ) आर्य्ये! दिष्ट्या वर्द्धसे। आर्य्यचारुदत्तस्य सकाशात् ब्राह्मण आगतः।

(ज) अहो! रमणीयता अद्य दिवसस्य। तत् हञ्जे! सादरं बन्धुलेन समं प्रवेशय एनम्।

(झ) यदार्य्या आज्ञापयति।

---

(ज) वसन्त इति। बन्धुलेन "परगृहललिताः—" इत्यादिवक्ष्यमाणजातीयेन पुरुषविशेषसमूहेन। एनं ब्राह्मणम्।

---

কারাগারে আবদ্ধ করিয়াছে, তিনি এখন রাহুমুখে চন্দ্রমণ্ডলের ন্যায় সেখানে অবস্থান করিতেছেন। সুতরাং আমি বেগে উপস্থিত হইয়া তাঁহাকে মুক্ত করিব ॥২৭॥

( এই বলিয়া চলিয়া গেল। )

(ছ) ( প্রবেশ করিয়া ) দাসী। আর্য্যে! ভাগ্যবশতঃ আপনি উন্নতিলাভ করিয়াছেন। আর্য্য চারুদত্তের নিকট হইতে একটী ব্রাহ্মণ আসিয়াছে।

(জ) বসন্তসেনা। ওহে! অদ্যকার দিনের বড়ই রমণীয়তা দেখিতেছি। অতএব ঝি! বন্ধুলগণের সহিত তাঁহাকে সাদরে প্রবেশ করাও।

(ঝ) দাসী। আপনি যাহা আদেশ করেন। ( এই বলিয়া চলিয়া গেল। )

विदूषको बन्धुलैन सह प्रविशति ।

विदू। हीही भो! तवच्चरणकिलेसविणिज्जिदेण रक्खसराम्रा रावणो पुप्फकेण विमाणेण गच्छदि ; अहं उण बम्हणो अकिदतवच्चरणकिलेसो वि णरणारीजणेण (१) गच्छामि ! (ञ)

चेटी। पेक्खदु अज्जो अम्हकेरकं गेहदुआरं। (ट)

विदू। अवलोक्य सविस्मयम्। अहो! सलिल-सित्त-मज्जिद-किद-हरिदोवलेवणस्स, विविह-सुअन्धि-(२) कुसुमोवहार-चित्त-

(ञ) हीही भोः! तपश्चरणक्लेशविनिर्जितेन राक्षसराजो रावणः पुष्पकेण विमानेन गच्छति ; अहं पुनर्ब्राह्मणोऽकृततपश्चरणक्लेशोऽपि नरनारीजनेन गच्छामि।

(ट) प्रेक्षतामार्य्यः अस्मदीयं गृहद्वारम्।

(ठ) अहो! सलिल-सिक्त-मार्जित-कृत-हरितोपलेपनस्य, विविध-सुगन्धिकुसुमोप-

(ञ) विदू इति। "हीही" इत्येकमेव हर्षद्योतकमव्ययम्। तथा च मेदिनी— "हीहीशब्दो विस्मयहासयोः।" तपश्चरणक्लेशेन विनिर्जितं विनिर्जित्य कुवेरादानीतं तेन। गच्छतीति अध्याहर्त्तव्यमपदयोगे वर्त्तमाना। नरयुक्तो नारीजनस्तेन पुष्पकारूढ़ेनेवेति भावः। अहो मम सौभाग्यमिति भावः।

(ठ) विदू इति। अत षष्ठ्यन्तपदानि वसन्तसेनाभवनद्वारस्येति वक्ष्यमाणस्य

বন্ধুলগণের সহিত বিদূষকের প্রবেশ।

(ঞ) বিদূষক। বেশ্ বেশ্। রাক্ষসরাজ রাবণ, তপস্যা করার ক্লেশে নির্জিত পুষ্পকবিমানে গমন করিতেন, আর (গরীব) ব্রাহ্মণ আমি, তপস্যা করার ক্লেশ না করিয়াও, নর-নারীগণের সঙ্গে গমন করিতেছি।

(ট) দাসী। আর্য্য! আপনি আমাদের গৃহদ্বার দর্শন করুন।

(১) णअरणारीजणेण। (२) सुगन्ध।

**लिहिद-भूमिभाअस्स, गअणतलालोअण-कोदूहल-दूरुण्णामिद-सीसस्स, दोलाअमाणावलम्बिदैरावण-हत्थब्भमाइद-मल्लिआदाम-गुणालङ्किदस्स, समुच्छिद-दन्तिदन्ततोरणाव-भासिदस्स, महा-**

हार-चित्रलिखितभूमिभागस्य, गगनतलालोकन-कौतूहलदूरोन्नमितशीर्षस्य, दोलायमानाव-लम्बितैरावण-हस्त-भ्रमायित-मल्लिकादामगुणालङ्कृतस्य, समुच्छ्रित-दन्तिदन्त-तोरणाव-

---

विशेषणानि। आदौ सलिलेन सिक्तं धौतम् अनन्तरञ्च मार्जितं कृतं हरितेन हरिद्वर्ण-रञ्जनद्रव्येण उपलेपनं यस्य तच्च तस्य। क्रमात् द्वयोर्द्वयोः पदयोः कर्म्मधारयः।

विविधानां सुगन्धिकुसुमानामुपहारैः सुन्दरभावेन विन्यासैः चित्रे लिखित इव आलेख्यपटे चित्रित इव भूमिभागो यत्र तस्य।

गगनतलस्य आलोकनाय यत् कौतूहलं तेन दूरं अत्युच्चं उन्नमितमुत्तोलितं शीर्षं मस्तकं येन तस्य, तस्येवेत्यर्थः। अत्र प्रतीयमानोत्प्रेक्षालङ्कारः।

दोलायमानौ वायुवेगेन सञ्चलितः अवलम्बितः नीचैः लम्बितः तथा ऐरावणहस्तस्य भ्रमो यस्मिन् स इव आचरित इति ऐरावणहस्तभ्रमायितः ऐरावतहस्तिनः शुण्डाभ्रमजनक इत्यर्थः, यो मल्लिकादामगुणो मल्लिकाकुसुममालासूत्रं तेन अलङ्कृतस्य भूषितस्य।

समुच्छ्रितेन अत्युच्चेन दन्तिदन्ततोरणेन हस्तिदन्तनिर्म्मिततोरणेन अवभासितस्य शोभितस्य।

---

(ঠ) বিদূষক। (দর্শন করিয়া বিস্ময়ের সহিত) কি আশ্চর্য্য! বসন্তসেনার ভবনদ্বারের কি অদ্ভুত সৌন্দর্য্য! এখানে প্রথমে জলদ্বারা ধৌত করিয়াছে এবং মার্জন করিয়াছে, পরে হরিদ্বর্ণ রঞ্জকদ্রব্য লেপন করিয়াছে, নানাবিধ সুগন্ধি পুষ্প সুন্দরভাবে বিন্যস্ত করায়, ইহার ভূমি-ভাগ যেন চিত্রপটে চিত্রিত করিয়া রাখা হইয়াছে। আকাশতলদর্শন করিবার কৌতুকবশতঃ, মস্তক যেন অতিদূরে উত্তোলন করিয়াছে। বায়ুবেগে আন্দোলিত, অধোলম্বিত এবং ঐরাবতহস্তীর শুণ্ডের ভ্রমজনক মল্লিকাপুষ্পমালায় এই দ্বারটী অলঙ্কৃত হইয়াছে। অত্যুচ্চ হস্তিদন্তের

रअणोवहारोवसोहिणा पवणवलन्दोलणा-ललन्तचञ्चलग्गहत्थेण, "इदो एहि" त्ति वाहरन्तेण विअ मं सोहग्गपडाआणिवहेणोव-सोहिदस्स, तोरणधरणत्थम्भवेदिआ-णिक्खित्त-समुल्लसन्तहरिद-चूदपल्लवललामफटिह-मङ्गल-कलसाहिरामोहअपास्सस्स, महासुर-

भासितस्य, महारत्नोपहारशोभिना पवनबलान्दोलना-ललच्चञ्चलाग्रहस्तेन "इत एहि" इति व्याहरतेव मां सौभाग्यपताकानिवहेनोपशोभितस्य, तोरणधारणस्तम्भवेदिका-निःक्षिप्तसमुल्लसद्धरित-चूतपल्लवललामस्फटिकमङ्गलकलशाभिरामोभयपार्श्वस्य, महासुर-वक्ष-स्थल-दुर्भेद्य-

महारत्नानां चन्द्रकान्तादीनामुपहारेण ग्रथनेन शोभत इति तेन, पवनबलेन वायुवेगेन या आन्दोलना सञ्चालनं तया ललच्चञ्चलः अधोलम्बमानकम्पितः अग्रहस्तो हस्ताग्रं यस्य तेनेव स्थितेनेत्यर्थः। मां व्याहरतेव वदतेव स्थितेन, सौभाग्यपताकानिवहेन सौभाग्य-सूचकपताकासमूहेन, उपशोभितस्य। अत्र प्रतीयमानोत्प्रेक्षावाच्योत्प्रेक्षयोरेकाश्रयानु-प्रवेशरूपः सङ्करः।

तोरणधरणस्य ये स्तम्भाः स्थूणास्तेषां या वेदिका मूलं बद्धभूमयस्तासु निःक्षिप्तैः स्थापितैः, समुल्लसन्तः शोभमानाः हरिताः पालाशवर्णाः चूतपल्लवा आम्रकिसलयानि येषु तैः, ललामानामुत्कृष्टानां स्फटिकानां तन्निर्म्मिता इत्यर्थः। ये मङ्गलकलशा माङ्गलिकपूर्णकुम्भास्तैः, अभिरामं मनोहरम् उभयपार्श्वं यस्य तस्य तथोक्तस्य।

"ललामं पुच्छपुण्ड्राश्वभूषाप्राधान्यकेतुषु" इत्यमरः।

তোরণে এই দ্বারদেশ শোভিত হইয়াছে। চন্দ্রকান্তপ্রভৃতি মহারত্ন গ্রথিত থাকায় শোভিত, বায়ুর আন্দোলনে চঞ্চল এবং অধোলম্বিত, সুতরাং হস্তাগ্রের ন্যায় অবস্থিত, তাহাতে 'এইদিকে আইস' এই কথাই যেন আমাকে বলিতেছে,—এইরূপ সৌভাগ্যসূচক পতাকাসমূহে এই দ্বারদেশ শোভিত হইয়াছে। তোরণধারণস্তম্ভের নীচের বেদি দুইটীর উপরে উৎকৃষ্ট স্ফটিকময় বহুতর মাঙ্গলিক কুম্ভ স্থাপিত করা হইয়াছে, সে গুলির উপরে হরিদ্বর্ণ সুন্দর আম্রপল্লব দেওয়া হইয়াছে, তাহাতে

वक्खत्थलदुव् भेज्जवज्जणिरन्तरपरिवद्धकणअकवाड़स्स, दुग्गदजण-मणोरहाआसकरस्स, वसन्तसेणा-भवण-दुआरस्स सस्सिरीअदा। जं मज्भं मज्झत्थस्स वि जणस्स वलाह्हिट्ठिं आआरेदि। (ठ)

चेटी। एदु एदु। इमं पढमं पओट्ठं पविसदु अज्जो। (ड)

विदू। प्रविश्यावलोक्य च। हीही भो! इधो वि पढ़मे पओट्ठे ससि-सङ्ख-मुणालसच्छाओ, विणिहिद-चुस-मुट्टिपाण्डुराओ,

वज्र-निरन्तरप्रतिबद्ध-कनक-कपाटस्य दुर्गतजनमनोरथायासकरस्य, वसन्तसेनाभवनद्वारस्य सश्रीकता। यन्मत्यं मध्यस्थस्यापि जनस्य बलाद्दृष्टिमाकारयति।

(ड) एतु एतु। इमं प्रथमं प्रकोष्ठं प्रविशतु आर्य्यः।

(ढ) हीही भोः! इतोऽपि प्रथमे प्रकोष्ठे शशि-शङ्ख-मृणालसच्छायाः, विनिहित-

महासुराणां हिरण्याक्षादीनां वक्षःस्थलवत् दुर्भेद्यानि, वज्रैः हीरकैः हीरकमयशङ्कुभिरित्यर्थः, प्रतिबद्धानि उपरिसंयुक्तानि च कनककपाटानि यत्र तस्य।

तथा दुर्गतानां दरिद्राणां जनानां ये मनोरथा अभिलाषास्तेषाम् आयासं वारं-वारमाकर्षणेन परिश्रमं करोतीति तस्य तथोक्तस्य, वसन्तसेनाया भवनद्वारस्य, अहो सश्रीकता शोभाशालित्वम्। यत्सत्यमेतन्निश्चितमित्यर्थः, यत् मध्यस्थस्य उदासीनस्य विषयनिःस्पृहस्य जनस्य दृष्टिम्, बलात् आकारयति आमन्त्रयति आकर्षतीत्यर्थः, एतद्भवनद्वारमिति शेषः।

দ্বারের উভয় পার্শ্ব অতি মনোহর দেখা যাইতেছে। ইহার সুবর্ণময় কপাটদ্বয় মহাসুরের বক্ষঃস্থলের ন্যায় দুর্ভেদ্য এবং ঘন ঘন হীরকশঙ্কু (পেরেক) দ্বারা বিদ্ধ রহিয়াছে। আর, এই দ্বারদেশটী, দরিদ্রলোকের অভিলাষের পরিশ্রমজনক। সুতরাং এই দ্বারদেশ, বলপূর্ব্বক উদাসীন ব্যক্তিরও দৃষ্টি আকর্ষণ করে।

(ড) দাসী। আর্য্য আসুন আসুন, এই প্রথম প্রকোষ্ঠে প্রবেশ করুন।

**विविह-रश्रण-पडिबद्धकञ्चण-सोवाण-सोहिदाओ, पासादपन्तिओ, ओलम्बिदमुत्तादामेहिं फटिहवादाअणमुहचन्देहिं णिज्झाअन्तो विअ उज्जइणिं। सोत्तिओ विअ सुहोवविट्ठो णिद्दाअदि**

चूर्णमुष्टिपाण्डुराः, विविध-रत्न-प्रतिबद्ध-काञ्चन-सोपान-शोभिताः, प्रासादपङ्क्तयः, अवलम्बितमुक्तादामभिः स्फटिकवातायनमुखचन्द्रैर्निध्यायन्तीव उज्जयिनीम्। श्रोत्रिय इव

(ढ) विदू इति। इतोऽपि अस्मिन्नपि। प्रकोष्ठे कक्षान्तरे। शशिनश्चन्द्रस्य शङ्खस्य मृणालस्य च समानाश्छायाः कान्तयो यासां ताः। "छाया सूर्य्यप्रिया कान्तिः प्रतिबिम्बमनातपः" इत्यमरः। विनिहितैः सर्वत्र समानभावेन स्थापितैः चूर्णमुष्टिभिः मुष्टि-मुष्टिपरिमितचूर्णैः, पाण्डुराः शुभ्रवर्णाः। तथा विविधरत्नैः प्रतिबद्धानि खचितानि यानि काञ्चनसोपानानि तैः शोभिताः। अवलम्बितानि अधोलम्बितानि मुक्तादामानि सूत्रग्रथितमौक्तिकानि मुक्तामयहाराश्च येषु तैः, स्फटिकवातायनान्येव स्फटिकनिर्म्मित-गवाक्षा एव मुखचन्द्रास्तैः, उज्जयिनीम्, निध्यायन्तीव अवलोकयन्तीव। अत्र रूपकसङ्कीर्णः क्रियोत्प्रेक्षालङ्कारः; तेन च उज्जयिन्याः शोभातिशयो व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः।

श्रोत्रियो ब्राह्मणविशेषः। सुखोपविष्टः एकत्र उत्कटविषयस्पृहाभावेन निश्चिन्तत्वात्, अन्यत्र तु गृहस्य सुरचिततया निरुद्वेगत्वादिति भावः। अत्र समासगतश्रौतोपमालङ्कारः।

श्रोत्रियमाह श्राद्धतत्त्वे देवलः—"एकां शाखां सकल्पां वा षड्भिरङ्गैरधीत्य वा। षट्कर्म्मनिरतो विप्रः श्रोत्रियो नाम धर्म्मवित्॥"

(ঢ) বিদূষক। (প্রবেশপূর্বক দর্শন করিয়া) ওহে! অত্যন্ত আশ্চর্য্য ত। এই প্রথম প্রকোষ্ঠে চন্দ্র, শঙ্খ ও মৃণালের সমান-কান্তি-সমন্বিত, মুষ্টিপরিমিত চূর্ণ প্রদান করায় শুভ্রবর্ণ এবং নানাবিধ-রত্ন-খচিত-স্বর্ণময় সোপানে শোভিত প্রাসাদশ্রেণী, লম্বিত-মুক্তামালাসমন্বিত স্ফটিকময় গবাক্ষরূপ মুখচন্দ্রদ্বারা উজ্জয়িনী নগরীকে যেন দর্শন করি-

दोवारिओ। सदहिणा कलमोदणेण पलोहिदा ण भक्खन्ति वाअसा वलिं सुधासवण्णदाए। आदिसदु भोदी। (ढ)

चेटी। एदु एदु अज्जो। इमं दुदिअं पओट्टं पविसदु अज्जो। (ण)

विदू। प्रविश्यावलोक्य च। हीही भो! इधो वि दुदिए पओट्ठे पज्जन्तोवणीद-जवस-वुस-कवल-सुपुट्टा-तेल्लब्भङ्गिदविमाणा बद्धा पवहण-वइल्ला। अअं अवरो अवमाणिदो विअ कुलीणो

सुखोपविष्टो निद्राति दौवारिकः। सदध्ना कलमौदनेन प्रलोभिता न भक्षयन्ति वायसा बलिं सुधासवर्णतया। आदिशतु भवती।

(ण) एतु एतु आर्य्यः। इमं द्वितीयं प्रकोष्ठं प्रविशतु आर्य्यः।

(त) हीही भोः! इतोऽपि द्वितीये प्रकोष्ठे पर्य्यन्तोपनीत-यवस-बुष कवल-सुपुष्टास्तैलाभ्यक्तविषाणा बद्धाः प्रवहणबलीवर्द्दाः। अयमन्यतरः अवमानित इव कुलीनो

तथा वायसाः काकाः, सदध्ना दधियुक्तेन, कलमस्य धान्यविशेषस्य ओदनेन अन्नेन तद्बलिघटकेनेत्यर्थः, प्रलोभिता लुब्धीकृता अपि, सुधासवर्णतया बलेः समन्तात् तल्लिप्त-चूर्णतुल्यशुभ्रवर्णतया बलिं ब्राह्मीप्रभृतिमातृभ्यो दत्तं गृहस्थस्य नित्यकर्त्तव्यं दधिमिश्रित-कलमौदनरूपमुपहारम्, न भक्षयन्ति, समन्ताल्लिप्तसुधाभ्रमादिति भावः।

अत्र वायसानामन्नेषु सुधाभ्रमाद्भ्रान्तिमानलङ्कारो वाचकाभावाद्व्यज्यते।

आदिशतु गन्तव्यपथमिति शेषः।

তেছে। দৌবারিকগণ, শ্রোত্রিয় ব্রাহ্মণের ন্যায় সুখে উপবেশন করিয়া নিদ্রা যাইতেছে। কাকপক্ষিগণ অন্নের লোভী হইয়াও, চূর্ণলেপের সমানবর্ণ বলিয়া, (তাহার ভ্রমবশতঃ) দধিযুক্ত কলমধান্যতণ্ডুলের শুভ্র অন্নরূপ পূজোপহার ভক্ষণ করিতেছে না। তুমি গন্তব্য পথ বলিয়া দাও।

(ণ) দাসী। আর্য্য আসুন আসুন, এই দ্বিতীয় প্রকোষ্ঠে প্রবেশ করুন।

দীহং ণীসসদি সেরিহো। ইদো অ অবণীদজুজ্ঝস্স মল্লস্স বিঅ মদ্দীঅদি গীবা মেসস্স। ইদো ইদো অবরাণং অস্সাণং কেসকম্পণা করীঅদি। অঅং অবরো পাড়চ্চরো বিঅ দিঢ়বদ্ধো

দীর্ঘং নিঃশ্বসিতি সৈরিভঃ। ইতশ্চ অপনীতযুদ্ধস্য মল্লস্যেব মর্দ্যতে গ্রীবা মেষস্য। ইত ইতঃ

(ন) বিট্ ইতি। পর্য্যন্তে মুখপ্রান্তে উপনীতানামুপস্থাপিতানাং যবসানাং ঘাসানাং বুষাণাং ধান্যত্বচাঞ্চ কবলৈর্গ্রাসৈঃ সুপুষ্টাঃ পুষ্টদেহাঃ, তৈলেন অভ্যক্তানি লিপ্তানি বিষাণানি শৃঙ্গানি যেষাং তে তথোক্তাঃ, প্রবহণবলীবর্দ্দাঃ শকটবাহিনো বৃষভাঃ, বর্ত্তন্ত ইতি শেষঃ।

"ঘাসো যবসম্" "কডঙ্গরো বুষং ক্লীবে ধান্যত্বচি পুমাংস্তুষঃ" ইতি চামরঃ।

কুলীন উচ্চকুলোৎপন্নো জনঃ। সৈরিভো মহিষঃ। অত্রোপমালঙ্কারঃ। ন চাত্র "হরবন্নীলকণ্ঠোঽয়ং বিরাজতি শিখাবলঃ" ইতি দর্পণোদাহৃতবৎ উপমানস্য জাতিগতাধিক্যাদনুচিতার্থত্বদোষ ইতি বাচ্যম্, কৌতুককারণায় ঈদৃশবৈসম্যেণাভিধানস্যৈব বিদূষকস্য স্বভাবত্বাৎ।

"লুলাপো মহিষো বাহদ্বিষৎকাসরসৈরিভাঃ" ইত্যমরঃ।

অপনীতং নিবারিতং যুদ্ধং যস্য তস্য। অত্রাপ্যুপমালঙ্কারঃ। পূর্ব্ববচ্চানুচিতার্থত্বদোষাভাবঃ।

কেশানাং কম্পনা পাণিপাতস্যেন স্থাপনা।

(ত) বিদূষক। (প্রবেশপূর্ব্বক দর্শন করিয়া) ওহে! বড়ই আশ্চর্য্য ত। এই দ্বিতীয় প্রকোষ্ঠেও, কতকগুলি শকটচালক বৃষ বদ্ধ আছে, (উহাদের) সম্মুখে প্রদত্ত ঘাস ও চিটা ভক্ষণ করিয়া, উহারা খুব পুষ্ট হইয়াছে এবং উহাদের শিং গুলিতে তৈল মাখিয়া রাখিয়াছে। এই আর একটা মহিষ, অপমানিত কুলীনের ন্যায় দীর্ঘনিশ্বাস ত্যাগ করিতেছে। এদিকে আবার যুদ্ধ হইতে নিবারিত মল্লযোদ্ধার ন্যায় মেষের গ্রীবা মর্দ্দন করিয়া দিতেছে। এইখানে এইখানে আবার ঘোটকগণের

मन्दुराए साहामिओ। अन्यतोऽवलोक्य च। इदो अ कूरच्चुअ-तेल्ल-मिस्सं पिण्डं हत्थी पडिच्छावीअदि मेत्थपुरिसेहिं। आदिसदु भोदी। (त)

चेटी। एदु एदु अज्जो। इमं तइअं पओट्ठं पविसदु अज्जो। (थ)

विदू। प्रविश्य दृष्ट्वा च। हीही भो! इधो वि तइए पओट्ठे इमाइं दाव कुलउत्तजणोववेसणणिमित्तं विरचिदाइं आसणाइं। अद्धवाचिदो पासअपोठे चिट्ठइ पोत्थओ। एसो अ

अपरेषामश्वानां केशकल्पना क्रियते। अयमपरः पाटच्चर इव दृढबद्धो मन्दुरायां शाखामृगः। इतश्च कूर-च्युत-तैल-मिश्रं पिण्डं हस्ती प्रतिग्राह्यते मात्रपुरुषैः। आदिशतु भवती।

(थ) एतु एतु आर्य्यः। इमं तृतीयं प्रकोष्ठं प्रविशतु आर्य्यः।

(द) हीही भोः। इतोऽपि तृतीये प्रकोष्ठे इमानि तावत् कुलपुत्रजनोपवेशन-

पाटच्चरश्चौरः। मन्दुरायां वाजिशालायाम्। शाखामृगो वानरः। अत्र उपमालङ्कारः। कूराहनौषधिविशेषात् च्युतं निर्गतं यत् तैलं तेन मिश्रं युक्तम्, पिण्डमन्नग्रासः। प्रतिग्राह्यते भोज्यते। मात्रपुरुषैर्बालकजनैर्हस्तिपकैरित्यर्थः।

(द) विदू इति। कुलपुत्रजनानामागतानां सत्कुलोत्पन्नयुवकानाम्, उपवेशन-निमित्तं विरचितानि निर्म्मितानि। अर्द्धवाचितम् अर्द्धपठितम्। एतत्तु पुस्तकस्य

কেশ রচনা করিতেছে। এই আর একটা বানরকে চোরের ন্যায় অশ্বশালায় বন্ধন করিয়া রাখা হইয়াছে। এইদিকে আবার মাহুতরা হাতীকে কূরনিঃসৃত-তৈল-যুক্ত অন্ন ভক্ষণ করাইতেছে। তুমি গন্তব্য পথ বলিয়া দাও।

(থ) দাসী। আর্য্য আসুন আসুন, এই তৃতীয় প্রকোষ্ঠে প্রবেশ করুন।

(দ) বিদূষক। (প্রবেশপূর্ব্বক দর্শন করিয়া) বড়ই আশ্চর্য্য ত।

**মণিমঅ-সারিআ-সহিদো পাসঅপীঠো। ইমে অ অবরে মঅণ-সন্ধি-বিগ্গহ-চদুরা বিবিহ-বণ্ণিআ-বিলিত্ত-চিত্ত-ফলঅগ্গ-হত্থা ইদো তদো পরিব্ভমন্তি [১] গণিআ বুড্ঢবিড়া অ। আদিসদু ভোদী। [দ]**

**চেটী। এদু এদু অজ্জো। ইমং চউত্থং পওট্ঠং পবিসদু অজ্জো। (ধ)**

নিমিত্ত বিরচিতানি আসনানি। অর্দ্ধবাচিতং পাশকপীঠে তিষ্ঠতি পুস্তকম্। এতত্ত মণিময়-সারিকা-সহিতং পাশকপীঠম্। ইমে চ অপরে মদন-সন্ধি-বিগ্রহ-চতুরা বিবিধ-বর্ণিকা-বিলিপ্ত-চিত্রফলকাগ্রহস্তা ইতস্ততঃ পরিভ্রমন্তি গণিকা বৃদ্ধবিটাশ্চ। আদিশতু ভবতী।

(ধ) এতু এতু আর্য্যঃ। ইমং চতুর্থং প্রকোষ্ঠং প্রবিশতু আর্য্যঃ।

অর্দ্ধাংশভাগমভ্যস্তঃ প্রসারিতং দৃষ্ট্বা নিরূপিতমিতি বোধ্যম্। পুস্তকং কামকলাদিশাস্ত্রীয়মিত্যর্থাদবধেয়ম্। পাশকপীঠে দ্যূতক্রীড়াখট্টিকায়াম্। মণিময়সারিকাভিঃ মণিনির্ম্মিতগুটিকাভিঃ সহিতম্। মদনে মদনব্যাপারবিষয়ে যঃ সন্ধির্নায়কনায়িকয়োঃ পরস্পরমিলনসম্পাদনম, বিগ্রহস্তয়োরেব পরস্পরকলহোৎপাদনম্, তয়োশ্চতুরা দক্ষা; তথা বিবিধাভির্বর্ণিকাভির্বর্ণৈঃ বিলিপ্তানি চিত্রিতানি চিত্রফলকানি কামব্যাপারবিষয়কা আলিখ্যপটা অগ্রহস্তে হস্তাগ্রে যাসাং যেষাঞ্চ তাস্তে চ।

এই তৃতীয় প্রকোষ্ঠেও, সদ্বংশজাত লোকদিগের বসিবার জন্য, এই আসন সকল সজ্জিত রহিয়াছে। অর্দ্ধপঠিত একখানি পুস্তক, পাশার খাটের উপর রহিয়াছে। মণিময় গুটীর সহিত এই একখানি পাশার খাট। কাম-বিষয়ের সন্ধি-বিগ্রহ ঘটাইতে নিপুণ এই আর কতকগুলি বেশ্যা ও বৃদ্ধ নাগরিগ লোক, নানাবর্ণে চিত্রিত চিত্রফলক হস্তাগ্রে লইয়া, ইতস্ততঃ ভ্রমণ করিতেছে। গন্তব্য পথ বলিয়া দাও।

(১)···পরিব্ভমদি ·।

विदू । प्रविश्यावलोक्य च । ह्हीह्हो भो ! इधो वि चउत्थे पओट्ठे जुवदिकर-ताड़िदा जलधरा विअ गम्भीरं णदन्ति मुदङ्गा । खीणपुण्णाओ विअ गअणादो तारआओ णिवड़न्ति कंसतालआ । महुअर-विरुअ-महुरं [१] वज्जदि वंसो । इअं अवरा ईसा-प्पणअ-कुविद-कामिणी विअ अङ्कारोविदा कररुह-परामरिसेण

(न) ह्हीह्ही भोः । इतोऽपि चतुर्थे प्रकोष्ठे युवति-कर-ताडिता जलधरा इव गम्भीरं नदन्ति मृदङ्गाः । क्षीणपुण्या इव गगनात्तारका निपतन्ति कांस्यतालाः । मधुकर-विरुत-मधुरं वाद्यते वंशः । इयमपरा ईर्ष्या-प्रणयकुपितकामिनीव अङ्कारोपिता कररुहपरामर्शेन

(न) विदू इति । युवतिभिः करैस्ताडिता प्रहृता । एतच्च उच्च-पार्वत्यप्रदेशीय-गृहस्थितयुवतीनामिव सम्भवतीति बोध्यम् । जलधरा मेघाः । नदन्ति शब्दायन्ते । अत्र उपमालङ्कारः । तारका नक्षत्राणि । तानि च पुण्यक्षयात् गगनतः पतन्तीति प्रसिद्धिः । कांस्यतालाः कांस्यनिर्म्मितकरतालाः, निपतन्ति नीचस्थोपरि उपरिस्थाः सन्निपतन्ति । तदानीञ्च नक्षत्रवदुज्ज्वलप्रभादर्शनात् सादृश्यम् । श्रौती उपमालङ्कारः । वंशो वेणुः, मधुकरविरुतवत् भ्रमरगुञ्जनवत् मधुरं यथा स्यात्तथा । लुप्तोपमा । पत्युरन्यकामिनी-रागेण ईर्ष्यावशात् प्रणये कुपिता कामिनी ईर्ष्याप्रणयकुपितकामिनी सा इव, अङ्के

(ध) दासी । आर्य्य आसुन आसुন, এই চতুর্থ প্রকোষ্ঠে প্রবেশ করুন।

(ন) বিদূষক। (প্রবেশপূর্ব্বক দর্শন করিয়া) বড়ই আশ্চর্য্য ত। এই চতুর্থ প্রকোষ্ঠেও, যুবতিগণের হস্তদ্বারা তাড়িত (বাদিত এবং প্রহৃত) মেঘের ন্যায় মৃদঙ্গগুলি, গম্ভীর শব্দ করিতেছে। ক্ষীণপুণ্য নক্ষত্রসমূহ যেরূপ আকাশ হইতে পতিত হয়, সেইরূপ কাঁসার করতাল-গুলি (নীচের খানার উপরে উপরের খানা) পতিত হইতেছে। ভ্রমর-রবের ন্যায় মধুর বংশী বাজাইতেছে। ঈর্ষ্যাবশতঃ প্রণয়কুপিত কামিনীর

(१)· महुअर-विरुअं विअ महुरं··· ।

सारिज्जदि वीणा। इमाओ अवराओ कुसुम-रस-मत्ताओ विअ महुअरिओ अदिमहुरं पगीदाओ गणिआ दारिआओ णच्चीअन्ति, णट्टअं पठीअन्ति ससिङ्गारओ। ओवग्गीदा गवक्खेसु वादं गेण्हन्ति सलिल-गग्गरीओ। आदिसदु भोदी। (न)

चेटी। एदु एदु अज्जो। इमं पञ्चमं पओट्ठं पविसदु अज्जो। (प)

सार्य्यते वीणा। इमा अपराश्च कुसुमरसमत्ता इव मधुकर्य्यः अतिमधुरं प्रगीता गणिका-दारिकाः नर्त्त्यन्ते, नाट्यं पाठ्यन्ते सशृङ्गारम्। अपवल्गिता गवाक्षेषु वातं गृह्णन्ति सलिलगर्ग्यः। आदिशतु भवती।

(प) एतु एतु आर्य्यः। इमं पञ्चमं प्रकोष्ठं प्रविशतु आर्य्यः।

आरोपिता पत्या प्रसादनाय वादकेन च वादनाय स्थापिता, वीणा, करवरुहाणां नखराणां परामर्शेन स्तनयोः तन्त्रीषु च योगेन, सार्य्यते मानादपसार्य्यते प्रसाद्यते इत्यर्थः, अन्यत्र तु ध्वन्युत्पादनार्थं स्थानान्तरं नीयते। अत्र पूर्णोपमालङ्कारः। कुसुमरसैः पुष्पमधुभिस्तत्पानैरित्यर्थः मत्ताः, मधुकर्य्य भ्रमर्य्यः प्रगीता गायन्त्यः, गणिकादारिका वेश्याबालिकाः, शृङ्गारेण रसेन सहेति सशृङ्गारं यथा स्यात्तथा, नर्त्त्यन्ते नृत्यं कार्य्यन्ते, नाट्यमभिनययोग्यं पुस्तकम्, पाठ्यन्ते च, शिक्षकैरिति शेषः। गवाक्षेषु तत्सन्निहित-स्थानेषु, अपवल्गिता अवलम्बिताः स्थापिता इत्यर्थः, सलिलगर्ग्यः पानीय जलपूर्णा मन्यन्यः पात्रविशेषा इति यावत्, वातं शैत्यसम्पादनार्थं वायुम्।

"मन्थनी गर्गरी समे" इत्यमरः।

---

ন্যায় এই আর একটী বীণা, ক্রোড়ে স্থাপন করিয়া, নখস্পর্শদ্বারা বাজাইতেছে। পুষ্পরসপানে মত্ত ভ্রমরীগণের ন্যায়, অতিমধুর গানকারিণী এই আর কতকগুলি বেশ্যাকন্যাকে নৃত্য করাইতেছে এবং অভিনয়ের যোগ্য শৃঙ্গাররসের পুস্তক পড়াইতেছে। গবাক্ষের নিকট স্থাপিত জলপূর্ণ গাড়ুগুলি বায়ু গ্রহণ করিতেছে। গন্তব্য পথ বলিয়া দাও।

विदू। प्रविश्य दृष्ट्वा च। ह्वीह्वी भो! इधो वि पञ्चमे पओट्ठे अअं दलिद्द-जण-लोहुप्पादणअरो आहरइ उवचिदो हिङ्गु-तेल्ल-गन्धो। विविह-सुरहि-धूमुग्गरेहिं णिच्चं सन्ताविज्जमाणं णीससदि विअ महाणसं दुवारमुहेहिं। अधिअं उस्सुआवेदि मं साहिज्जमाण-बहुविह-भक्ख-भोअण-गन्धो। अअं अवरो पडच्चरं विअ पोट्टिं धोअदि रूपिदारओ। बहुविहाहारविआरं उवसाहेदि सूवआरो। बज्झन्ति मोदआ, पच्चन्ति अ पूवआ।

(फ) ह्वीह्वी भोः! इतोऽपि पञ्चमे प्रकोष्ठे अयं दरिद्र जन-लोभोत्पादनकरं आहरति उपचितो हिङ्गु-तैलगन्धः। विविध-सुरभि-धूमोद्गारैः नित्यं सन्ताप्यमानं निःश्वसतीव महानस द्वारमुखैः। अधिकमुत्सुकायति मां साध्यमानबहुविध भक्ष्य-भोजनगन्धः। अयमपरः पटच्चरमिव पेटिं धावति रूपदारकः। बहुविधाहार-विकारमुपसाधयति सूपकारः।

(फ) विदू इति। उपचितो वृद्धिप्राप्तः। आहरति नासिकामाकर्षति। महानसं पाकस्थानं कर्त्तृ, नित्यं सन्ताप्यमानं सर्व्वदा पाकानुष्ठानेन अग्निना तापं नीयमानं सत्, विविधानां सुरभीनां धूमानामुद्गारो येभ्यस्तः द्वारमुखैः करणैः, निःश्वसतीव। अत्र क्रियोत्प्रेक्षालङ्कारः। "पाकस्थानमहानसे" इत्यमरः। साध्यमानानां सम्पाद्यमानानां बहुविधानां भक्ष्याणां चर्व्वणीयानां भोजनानां पेयादीनाञ्च गन्धः मामधिकम्, उत्सुकायते

(প) দাসী। আর্য্য আস্থন আস্থন, এই পঞ্চম প্রকোষ্ঠে প্রবেশ করুন।

(ফ) বিদূষক। (প্রবেশপূর্ব্বক দর্শন করিয়া) বড়ই আশ্চর্য্য।ত এই পঞ্চম প্রকোষ্ঠেও দরিদ্রলোকের লোভজনক এই হিঙ্গুতৈলের গন্ধ ক্রমে বৃদ্ধি পাইতে থাকিয়া, নাসিকা আকর্ষণ করিতেছে। সর্ব্বদা সন্তাপ্যমান পাকস্থানটী, দ্বারমুখদ্বারা নানাবিধ সৌরভযুক্ত ধূম উদ্গীর্ণ করিয়া, যেন নিশ্বাস ত্যাগ করিতেছে। নানাবিধ-চর্ব্য-চোষ্যাদি বস্তু প্রস্তুত করিতেছে, ইহার গন্ধ, আমাকে অত্যন্ত উৎকণ্ঠিত করিয়া তুলি-

आत्मगतम्। अविदाणिं इह वड्डिअं भुञ्जसु त्ति पादोदअं लहिस्सं ?
अन्यतोऽवलोक्य च। इदो गन्धव्व-सुरगणेहिं विअ विविहालङ्कारसोहि-
देहिं गणिआजणेहिं वन्धुलेहिं अ जं सच्चं सग्गीअदि एदं गेहं।
भो! के तुम्हे वन्धुला णाम ?। (फ)

बन्धुलाः। । वयं खलु—

परगृहललिताः परान्नपुष्टाः
परपुरुषैर्जनिताः पराङ्गनासु।

बध्यन्ते मोदकाः, पच्यन्ते च पूपकाः। अपि इदानीमिह वर्द्धितं भुङ्क्ष्व इति पादोदकं लप्स्ये ?। इह गन्धर्व्वसुरगणैरिव विविधालङ्कारशोभितैः गणिकाजनैः बन्धुलैश्च यत्सत्यं स्वर्गायितं इदं गेहम्। भोः! के यूयं बन्धुला नाम ?।

भोजनाय उत्सुकं करोति। रूपिदारकी रूपवान् सुन्दरो बालकः, पटच्चरं जीर्णवस्त्रमिव, पेशिं डिम्बम्, धावति पाकार्थं प्रक्षालयति, "पटच्चरं जीर्णवस्त्रम्" "पेशी कोषी हिहीनेऽण्डम्" इति चामरः। सूपकारः पाचकः, बहुविधानामाहाराणां खाद्यानां विकारं पाकेन विक्रमम्, उपसाधयति निष्पादयति। पूपकाः पिष्टकानि। अपिशब्दः प्रश्ने। इह अस्मिन् स्थाने, वर्द्धितं प्रचुरम्। इति उक्तेः परमित्यर्थः, पादोदकं पादप्रक्षालनार्थं जलम्, लप्स्ये एष्य इति शेषः। यत्सत्यमित्येकमेव पदं निश्चितमिति तदर्थः।

য়াছে। এই আর একটী সুন্দর বালক, জীর্ণ কাপড়ের মত ডিম ইতেছে। পাচকগণ, বহুবিধ আহার্য্য নির্ম্মাণ করিতেছে, মোদক বাঁধিতেছে এবং পিষ্টক পাক করিতেছে। (স্বগত) "এইখানে প্রচুর আহার করুন" এইকথা বলার পর এখন পা ধোয়ার জল পাইব কি ? (অন্যদিকে দৃষ্টিপাত করিয়া) দেবগণ ও গন্ধর্বগণের ন্যায় নানাবিধ অলঙ্কারে অলঙ্কৃত বেশ্যাগণ ও বন্ধুলগণদ্বারা এখন এই বাড়ীখানি, নিশ্চয়ই স্বর্গলোকের মত হইয়াছে। ওহে! বন্ধুলনামে তোমরা কে হে ?।

परधननिरता गुणेष्ववाच्या
गजकलभा इव बन्धुला ललामः ॥२८॥

परेति । परगृहे ललिता ईप्सिता ईप्सितत्वेन पालिताः, परान्नेन पुष्टा वर्द्धितदेहाः, परपुरुषैः पराङ्गनासु जनिताः, परधनेषु निरता भोगादिना आसक्ताः, तथा गुणेषु वैचक्षण्यादिषु अवाच्याः तेषामसत्त्वादनुदाहार्य्या निर्गुणा इत्यर्थः, बन्धून् सहोदरादीन् लान्ति अनायासेन आददते प्राप्नुवन्तीति व्युत्पत्त्या बन्धुलाख्यदाख्यया रूढाः, गजकलभा हस्तिशावका इव, ललामः विलसामः ।

अत्र गजकलभानामपि परगृहललितत्वादिधर्म्मवत्त्वात् पूर्णोपमालङ्कारः । तथा एकस्यैव परशब्दस्य पञ्चधा प्रयोगात् अनवीकृतत्वदोषः, "गजकलभा ललन्ति वयन्तु ललाम।" इति पुरुषभेदात् "लतेव राजसे तन्वि ।" इति दर्पणोदाहरणवदुपमागतभग्नप्रक्रमतादोषश्च। तेन च श्लोक एवं पठनीयः—

"निजगृहरहिताः परान्नपुष्टाः अपरिचितैर्जनिता गणाङ्गनासु ।
इतरधनरता गुणेष्ववाच्या गजकलभा इव बन्धुलाः प्रसिद्धाः ॥"

न च "कलभः करिशावकः" इत्यमरादिप्रामाण्यात् कलभशब्देनैव करिशावकप्राप्तौ पुनर्गजशब्दोपादानात् पुनरुक्ततादोषोऽपीति वाच्यम्, गजशब्देन तत्साहचर्य्यप्रतीतेस्तेन च बन्धुलानामपि जनकसाहचर्य्यरूपव्यङ्ग्यार्थलाभात् "धनुर्ज्यादिषु शब्देषु शब्दास्तु धनुरादयः । आरूढत्वादिबोधाय" इति साहित्यदर्पणे प्रतिप्रसवात् ।

अहो ! कीयं तदानीन्तनी समाजरीतिः । यदीदृशा अपि निःसङ्कोचमेवात्मानं भद्रेषु परिचाययन्ति, समाजेषु च निर्बाधमेवान्तर्भवन्ति, संस्कृतभाषा भवन्तश्च आत्मनः शिक्षितत्वमनीचत्वञ्च प्रयोतयन्ति ; सत्कुलजाता ब्राह्मणाश्च निकटे गमेव वेश्या, परिणयन्ति, तादृशा एव च सन्तः सत्समसज्जनतया विशिष्टशिष्टतया च प्रथन्त इति ।

"लल विलासे" इति भौवादिको धातुः । पुष्पिताग्रा वृत्तम् ॥२८॥

---

বন্ধুলগণ। আমরা, পরপুরুষকর্ত্তৃক পরস্ত্রীতে উৎপাদিত, পর
পরিপালিত, পরান্নে পরিপুষ্ট, পরধনভোগে আসক্ত এবং গুণে

विदू। आदिसदु भोदी। (ब)

चेटी। एदु एदु अज्जो। इमं छट्ठं पओट्ठं पविसदु अज्जो। (भ)

विदू। प्रविश्यावलोक्य च। ह्हीह्ही भो! इधो वि छट्ठे पओट्ठे अमुं दाव सुवस्स-रअणाणं कम्मतोरणाइं णील-रअण-विणिक्खित्ताइं इन्दाउहट्ठाणं विअ दरिसअन्ति। वेदुरिअ-मोत्तिअपवाल-पुप्फराअ--इन्दणील--कक्केतरअ--पद्मराअ--मरगअ--पहुदिआइं

(ब) आदिशतु भवती।

(भ) एतु एतु आर्य्यः, इमं षष्ठं प्रकोष्ठं प्रविशतु आर्य्यः।

(म) ह्हीह्ही भोः। इतोऽपि षष्ठे प्रकोष्ठे अमूनि तावत् सुवर्णरत्नानां कर्म्मतोरणानि नील-रत्न-विनिक्षिप्तानि इन्द्रायुधस्थानमिव दर्शयन्ति। वैदूर्य्यमौक्तिक-प्रवाल-पुष्परागेन्द्रनील-

---

(म) विदू इति। नीलरत्नैर्मरकतादिभिर्विनिक्षिप्तानि खचितानि, सुवर्णरत्नानां माणिक्यादिरत्नमिश्रितस्वर्णानाम्, कर्म्मणा घटनक्रियया जातानि तोरणानि कर्म्मतोरणानि, इन्द्रायुधस्य स्थानम् आस्पदं प्रसक्तिम, दर्शयन्तीव। अत्र क्रियोत्प्रेक्षालङ्कारः।

वैदूर्य्यादीनि रत्ननामानि। अन्योन्यं विचारयन्ति परस्परं तारतम्यं कुर्व्वन्ति।

---

( একেবারে নিগুর্ণ )। আমাদের নাম বন্ধুল, আমরা হস্তি-শাবকের ন্যায় বিচরণ করি ॥২৮॥

(ব) বিদূষক। পথ বলিয়া দাও।

(ভ) দাসী। আর্য্য আসুন আসুন, এই ষষ্ঠ প্রকোষ্ঠে প্রবেশ করুন।

(ম) বিদূষক। ( প্রবেশপূর্ব্বক দর্শন করিয়া ) বড়ই আশ্চর্য্য ত! ষষ্ঠ প্রকোষ্ঠেও, নীলমণিখচিত এবং স্বর্ণ ও রত্ন নির্ম্মিত এই তোরণ-'াপনাদিগের উপরে যেন ইন্দ্রধনুর অবস্থান দেখাইতেছে। শিল্পিগণ